ग्रहाश्चन्द्रश्च सूर्यश्च आदित्या बलवत्तराः ।
सन्नद्धाः सर्वदेवास्ते वज्रिणं जग्मुरादृताः ॥ ३७॥

सर्वदेवगणैरिन्द्रो रणभूमिं समाययौ ।
ऐरावतसमारूढो वज्रपाणिर्महाबलः ॥ ३८॥

देवसैन्यं सुसन्नद्धमागतं स्वबलान्वितम् ।
दृष्ट्वा दैत्यगणाः सर्वे जघ्नुः शस्त्रप्रहारतः ॥ ३९॥

देवा जघ्नुश्च तान् शस्त्रैर्महाक्रोधसमन्विताः ।
एवं परस्परं तत्र तुमुलं युद्धमप्यऽभूत् ॥ ४०॥

मृता दैत्यास्तथा देवस्ताडिताः शस्त्रघाततः ।
दैत्यैर्हताश्च देवास्ते छिन्ना भिन्नाः सुमूर्छिताः ॥ ४१॥

एवं परस्परं युद्धं देवदैत्यविनाशनम् ।
सप्तरात्रमभूत्तीव्रं ततो दैत्याः पलायिताः ॥ ४२॥

विरोचनादयः सर्वे मूर्छिता धरणीतले ।
जयवन्तः सुरेन्द्रास्ते वदन्तः स्म प्रहर्षिताः ॥ ४३॥

एतद् दृष्ट्वा महाश्चर्यं सुन्दरप्रिय आगतः ।
ज्येष्ठपुत्रो मत्सरस्य युयुधे सर्वदैवतैः ॥ ४४॥

शस्त्रास्त्रैर्मल्लयुद्धैस्तन् मर्दितं तेन सर्वशः ।
देवसैन्यं दिक्षु तत्र पलायत भयातुरम् ॥ ४५॥

शोणितप्रस्रवास्तत्र नद्यो जाताः प्रजापते ।
इन्द्रोऽपि युयुधे तेन दैत्यपुत्रेण धीमता ॥ ४६॥

वज्रेण निहतस्तत्रेन्द्रेण दैत्यो महाबलः ।
न चचाल तदाश्चार्यमिन्द्रचेतसि सङ्गतम् ॥ ४७॥

दैत्यपुत्रः समागत्य स्वङ्गेनैरावतं गजम् ।
मूर्छितं कारयामास वज्रिणं च पदाग्रहीत् ॥ ४८॥

मर्दयित्वा सुरेशानं स्ववशं च चकार ह ।
धृत्वा पुरन्दरं सोऽपि स्वस्थानमगमन्मुदा ॥ ४९॥

दैत्यैः सम्पूजितस्तत्र महाबलपराक्रमः ।
सुन्दरप्रियपुत्रोऽभून् मत्सरस्य प्रहर्षितः ॥ ५०॥

देवाः केचिद् धृतास्तत्र केचिद्वै मूर्छिताः कुताः ।
केचित् पलायिता दक्ष भग्नाः केऽपि विचूर्णिताः ॥ ५१॥

एवं स सकलान् देवान् वशांश्चक्रे महाबलः ।
मत्सरासुर एवाऽयं स्वर्गाधीशो बभूव ह ॥ ५२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते मत्सरासुरविजय इन्द्रपराजयो नाम सप्तविंशतितमोऽध्यायः ॥ १.२७

(Page खं. १ अ. २८ पान ६५)

## १.२८ मत्सरासुरचेष्टितकथनं नाम अष्टाविंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
देवाश्च शरणं केचित् कश्यपादीन् समाययुः ।
विह्वला भयभीतास्ते शशंसुर्दैत्यचेष्टितम् ॥ १॥

देवा ऊचुः ।
मत्सरेण प्रदुष्टेन जिता देवाः सवासवाः ।
इन्द्रो धृतो महाभाग वयं शरणमागताः ॥ २॥

रक्ष त्वं मुनिशार्दूल त्वं पिता भयविह्वलान् ।
जीवनाशसमाद् दुःखादिन्द्रं मोचय मत्सरात् ॥ ३॥

देवानां वचनं श्रुत्वा वसिष्ठादिसमन्वितः ।
ब्रह्माणं प्रययौ देवैः कश्यपो वंशवृद्धये ॥ ४॥

सत्यलोके समासीनं गत्वा दृष्ट्वा ननाम च ।
स्तुत्वा तं विविधैर्वाक्यैः प्राञ्जलिः प्रत्युवाच ह ॥ ५॥

कश्यप उवाच ।
मत्सरेण धृतः स्वामिन्निन्द्रो देववरैः सह ।
देवस्थानपतिर्जातो दैत्यः परमदारुणः ॥ ६॥

देवा दैत्याः पदे स्वे स्वे यथायोग्ये वसन्ति वै ।

तथा कुरु जगन्नाथ त्वं धाता च गतिर्हि नः ॥ ७॥

कश्यपस्य वचः श्रुत्वा देवांश्चर्षीनथाऽब्रवीत् ।
पितामहः प्रजानाथ हृदयेन विदूयता ॥ ८॥

ब्रह्मोवाच ।
शृणुध्वं मुनयो देवाः शिवप्राप्तवरोऽसुरः ।
अजेयः सर्वभूतानां देवादीनां विशेषतः ॥ ९॥

न शक्तोऽहं कदा कर्तुं यथायोग्यं स्वभावतः ।
गच्छामि शरणं विष्णुं भवद्भिः सह पालकम् ॥ १०॥

वैकुण्ठमगमद् ब्रह्मा देवैश्च मुनिभिः सह ।
गत्वा विष्णुं नमस्कृत्य स्तुत्वोवाच प्रजापतिः ॥ ११॥

मत्सरेण धृतो युद्धे इन्द्रो देववरः प्रभो ।
किं स्थितोऽसि महाविष्णो त्वं पालक इति श्रुतः ॥ १२॥

ब्रह्मणो वचनं श्रुत्वा विष्णुस्तं प्रत्युवाच ह ।
न शक्यते मया धातर्वशं कर्तुं महासुरम् ॥ १३॥

शिवस्य वरदानेन मत्तोऽसौ दैत्यपुङ्गवः ।
तस्माच्च शरणं यामः शङ्करं नात्र संशयः ॥ १४॥

ब्रह्मादिभिः स्वयं विष्णुः कैलासमगमत्किल ।
शङ्करं प्रणिपत्याऽह सर्वैर्मुनिगणैः सह ॥ १५॥

विष्णुरुवाच ।
नमस्ते भगवन् शम्भो नमस्ते शूलपाणये ।
नमस्ते जगतां नाथ सर्वसाक्षिन्नमोस्तु ते ॥ १६॥

नमो नमो महादेव स्रष्ट्रे राजसरूपिणे ।
पात्रे विष्णुस्वरूपाय हन्त्रे रुद्रस्वरूपिणे ॥ १७॥

पञ्चवक्त्रधरायैव योगिने योगदायिने ।
निर्गुणाय निरूपाय ब्रह्मभूताय ते नमः ॥ १८॥

मत्सरेण महादेव पीडितास्ते सुरर्षयः ।
धृत इन्द्रः सुराधीशो मर्दयित्वा सुरान् परम् ॥ १९॥

भयभीता वयं तेन शरणं त्वामुपागताः ।

रक्ष नो देवदेवेश त्वं श्रेष्ठो देवपालक ॥ २०॥

विष्णोर्वचनमाकर्ण्य शिवश्चिन्तातुरः स्वयम् ।
उवाच तान् देवमुनीन् विष्णुमुख्यान् महेश्वरः ॥ २१॥

शिव उवाच ।
तपसोग्रेण देवेश मया दैत्यो विवर्धितः ।
वरैर्महादुर्लभैश्च किं करोमि जनार्दन ॥ २२॥

दैत्यो नाशयितुं विष्णो न शक्यः स कदाचन ।
विचारं कुरु देवेश त्वं बुद्धियुत एव हि ॥ २३॥

शिवस्य वचनं श्रुत्वा विष्णुः परमकम्पितः ।
उवाच दुःखयुक्तेन हृदयेन सुरेश्वरम् ॥ २४॥

विष्णुरुवाच ।
कर्ता त्वमन्यथा कर्ता ह्यकर्ता नात्र संशयः ।
विपरीतं त्वयोक्तं चेद्वयं किं करवामहे ॥ २५॥

तव वै सन्निधौ देव वसामश्च सदाशिव ।
(Page खं. १ अ. २९ पान ६६)
वयं दैत्यवशा नैव चराम इति मे मतिः ॥ २६॥

वैकुण्ठादिपदं त्यक्त्वा तव सन्निधिमागताः ।
अधुना मत्सरो दैत्य आगमिष्यति तत्र सः ॥ २७॥

वैकुण्ठं सत्यलोकं च गृहीत्वा सुखमेष्यति ।
तव स्थानं न कैलासं भक्तत्वाद्वै ग्रहीष्यति ॥ २८॥

विष्णोश्च वचनं श्रुत्वा शिवो निःश्वाससंयुतः ।
स्थितस्तत्रैव दक्ष त्वं शृणु मत्सरचेष्टितम् ॥ २९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते मत्सरासुरचेष्टितकथनं नाम अष्टाविंशोऽध्यायः ॥ १.२८

## १.२९ शिवमत्सरासुरसमागमो नाम एकोनत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
इन्द्रं धृत्वा महादैत्यो मत्सरो हर्षसंयुतः ।
ऐरावतसमारूढो ययौ साममरावतीम् ॥ १॥

विरोचनमुखैर्वीरैः संवृतो दैत्यपुङ्गवः ।
शुशुभे तत्र तेजस्वी प्रभावेण बलेन च ॥ २॥

इन्द्रासने समासीनं तं ययुश्चाप्सरोगणाः ।
गंधर्वाश्चारणाश्चैव भयभीताः समन्ततः ॥ ३॥

सिषेविरे महाभागं मत्सरं त्वमितौजसम् ।
सर्वभावेन तं हृष्टं चक्रुः सर्वे स्वविद्यया ॥ ४॥

देवोद्यानेषु सर्वेषु विचचार महासुरः ।
कुशलो देवभोगेषु भोगांश्च बुभुजे परान् ॥ ५॥

देवस्थानानि सर्वाणि विभज्य प्रददौ स्वयम् ।
दैत्येभ्यो मुख्यमुख्येभ्यो बलेन सहितो मुने ॥ ६॥

दत्तानि यानि स्थानानि स्थितास्तेषु महासुराः ।
नानारूपान् देवभोगान् बुभुजुस्तत्र संस्थिताः ॥ ७॥

मत्सरं सेवमानास्ते ह्यतिदर्पेण संवृताः ।
एकस्मिन् दिवसे भौम इन्द्रासनसमाश्रितः ।
मत्सरो हर्षयुक्तः सन् दैत्यान् प्रोवाच गर्वितः ॥ ८॥

मत्सरासुर उवाच ।
भो भो विरोचनाद्याश्च शृणुध्वं च वचोऽसुराः ।
ब्रह्मादयो महाभागाः कथमत्रैव नागताः ॥ ९॥

नमस्यन्ति न देवेशा मां यदा मत्सरान्विताः ।
सर्वं मदं तदा तेषां हरिष्यामि न संशयः ॥ १०॥

मत्सरस्य वचः सर्वे तुष्टुवुर्दैत्यदानवाः ।
दूतं सम्प्रेषयामास मत्सरः क्रोधसंयुतः ॥ ११॥

गच्छ दूत त्रयाणां त्वं ब्रह्मादीनां पदेषु वै ।
देवेशान् वद वाक्यं मे सावधानेन चेतसा ॥ १२॥

दर्शनार्थं मत्सरस्य यान्तु देवा मया सह ।

नोचेन्मत्सरदैतेयस्ताडयिष्यति निश्चितम् ॥ १३॥

मत्सरस्य वचः श्रुत्वा गतो दूतो बलान्वितः ।
अन्धको नाम दैत्येन्द्रो महावेगसमन्वितः ॥ १४॥

सत्यलोके स धातारं न ददर्श महाबलः ।
शून्यां तां नगरीं वीक्ष्य गतो वैकुण्ठमादरात् ॥ १५॥

तत्रापि तादृशं दृष्ट्वा गतः कैलासमेव सः ।
तत्रानन्दयुतान् सर्वान् देवांश्चर्षीन् ददर्श च ॥ १६॥

सभामध्यगतो दैत्यः शिवचारैः प्रवेशितः ।
आसनस्थेन शर्वेण आसने विनिवेशितः ॥ १७॥

कैलासविभवं दृष्ट्वा विस्मितो मानसेऽभवत् ।
सदानन्दमयं धन्यं मन्यमानः स्वचेतसि ॥ १८॥

पृच्छन्तं शङ्करं दैत्य उवाच बलगर्वितः ।
(Page खं. १ अ. २९ पान ६७)
तृणीकृत्य महेशानं सर्वान् देवांस्तदान्धकः ॥ १९॥

अन्धक उवाच ।
मत्सरासुरवाक्यं च शृणुध्वं सुरसत्तमाः ।
जित्वेन्द्र देवनाथं च जातोऽहं जगदीश्वरः ॥ २०॥

अतो मद्दर्शनार्थं च भवन्तोऽपि सहानुगाः ।
ब्रह्मा विष्णुश्च रुद्रश्च आगच्छन्तु मदन्तिकम् ॥ २१॥

तस्माद्भवद्भिरद्यैव मया सह सुरेश्वराः ।
आगन्तव्यं मत्सरस्य दर्शनार्थं तु सत्वरम् ॥ २२॥

अन्धकस्य वचः श्रुत्वा शिवः क्रोधसमन्वितः ।
उवाच तं महादैत्यं मुखादग्निं समुद्गिरन् ॥ २३॥

शिव उवाच ।
किं मां वदसि पापिष्ठ तृणीकृत्य च यत् वचः ।
मद्वरस्य प्रभावेण मत्सरो विजयी ध्रुवम् ॥ २४॥

यदाऽहं क्रोधसंयुक्तस्तदा भस्ममयं खलम् ।
करिष्यामि न सन्देहः सासुरं मत्सरं खलु ॥ २५॥

मत्सराज्ञावशोऽहं रे किं प्रजातोऽसुराधम ।
मत्वा त्वां मूढ दूतेति मोचयामि न संशयः ॥ २६॥

गच्छ तं मत्सरं दैत्यं वद वाणीं मयेरिताम् ।
नोचेत्त्वां भस्मसात् कुर्यां कुपितोऽहं खलोत्तम ॥ २७॥

शिवस्य वचनं श्रुत्वा मत्सरं त्वन्धको ययौ ।
कथयामास वृत्तान्तं सर्वदैत्ययुताय च ॥ २८॥

विभवं वर्णयामास कैलासस्य यथायथम् ।
ब्रह्माण्डे न समं किञ्चित् कैलासस्य महासुराः ॥ २९॥

अन्धकस्य वचः क्रूरं श्रुत्वा दैत्याः महाबलाः ।
विरोचनमुखाः सर्वे मत्सरं क्रूरमब्रुवन् ॥ ३०॥

किं स्थितोऽसि महाबाहो जेष्यामस्त्वत्प्रसादतः ।
देवत्रयं न सन्देह आज्ञां देह्यसुरेश्वर ॥ ३१॥

दैत्यानां वचनंश्रुत्वा तेजोयुक्तं स मत्सरः ।
उवाच क्रोधसंयुक्तस्तान् दैत्यान् हर्षयन्निव ॥ ३२॥

मत्सर उवाच ।
मया तपःप्रभावेण प्राप्तं तेजो महाद्भुतम् ।
तत्र शम्भुर्वृथा मानी स्वात्मानं मन्यतेऽर्थदम् ॥ ३३॥

तपोहीनाय राज्यं वै ब्रह्माण्डस्य ददाति चेत् ।
तदायं जगदीशो वै मन्यते नान्यथा मया ॥ ३४॥

अतः शम्भुं विजेष्यामस्तपस्तेजः समन्वितः ।
दर्पं तस्य हरिष्यामि वृथा ब्रह्मेति मानिनम् ॥ ३५॥

वेदान्ते ब्रह्मवेदेषु कथितं निर्विकपल्कम् ।
तदेव सर्वमान्यं वै जगदीशतया बभौ ॥ ३६॥

सकामकर्मणा सर्वं प्राप्यते मनुजस्तथा ।
ब्रह्मार्पणतया कर्म कृतं चेन्मुक्तिराप्यते ॥ ३७॥

अखिलं कर्मणा सृष्टं पालितं च प्रहीयते ।
तत्र किं तैस्त्रिभिर्देवैः क्रियते कर्मजैः खलु ॥ ३८॥

कर्मणाऽहं सृजाम्येव पालयामि हरामि च ।

कर्माधीनं जगत्सर्वं सदेवासुरमानुषम् ॥ ३९॥

एवमुक्त्वा महादैत्यो विरोचनमुखैर्वृतः ।
आययौ शङ्करस्थानमावेशेन समन्वितः ॥ ४०॥

नानाशस्त्रास्त्रधाराभिर्हतास्तत्र बहिः स्थिताः ।
शिवचाराश्च तैः सर्वे पलायन्त च पीडिताः ॥ ४१॥

छिन्नभिन्नाङ्गदेहाश्च ययुः शङ्करसन्निधौ ।
ऊचुः समागतो दैत्यैः सर्वैः साकं स मत्सरः ॥ ४२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते शिवमत्सरासुरसमागमो नाम एकोनत्रिंशोऽध्यायः ॥ १.२९

(Page खं. १ अ. ३० पान ६८)

## १.३० शिवादिपराजयो नाम त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
गणानां च पिशाचानां वचनं दारुणं महत् ।
श्रुत्वा शिवः स्वयं तत्र युद्धार्थं दंशितोऽभवत् ॥ १॥

ब्रह्मा विष्णुश्च कामश्च वसवो धनदोऽभवत् ।
चन्द्रः सूर्यस्तथा वह्निसमीराद्याश्च दंशिताः ॥ २॥

कालाग्निरुद्रमुख्या ये भैरवो भूतनायकः ।
कृत्वा युद्धक्षमं वेषं स्थिताः शङ्करसन्निधौ ॥ ३॥

अष्टभैरवमुख्याश्च वीरभद्रादयोऽभवन् ।
नन्दी भृङ्गी पुष्पदन्तमहाकालरवाः स्थिताः ॥ ४॥

महाकालीमुखास्तत्र देव्यः शस्त्रधराऽऽययुः ।
एवं नानाविधैः सैन्यैर्वृतः शम्भुर्महेश्वरः ॥ ५॥

वृषारूढो महातेजा आययौ युद्धलालसः ।
यत्र दैत्याः स्थितास्तत्र कार्तिकेयादिभिर्युतः ॥ ६॥

शङ्करं सैन्यसंयुक्तं नानायुद्धविशारदम् ।

नानाशस्त्रधरं दृष्ट्वा दैत्येशाश्चिक्षिपुः शरान् ॥ ७॥

तद् दृष्ट्वा कुपिता देवाः शस्त्रास्त्रैस्तानताडयन् ।
एवं परस्परं युद्धमभवद्दारुणं महत् ॥ ८॥

देवानां चैव दैत्यानामन्योन्यजयकाङ्क्षिणाम् ।
शस्त्रास्त्रनिचयैर्बाणैरन्धकारः प्रवर्तितः ॥ ९॥

सैन्यानां रजसा व्याप्तमाकाशं सर्वतो बभौ ।
न प्राज्ञायत तत्रैव स्वीयो वाऽपर एव च ॥ १०॥

घण्टानां शङ्खतूर्याणां वीराणां रथिनां तथा ।
बृंहितानां हेषितानां शब्दैस्तद्बधिरीकृतम् ॥ ११॥

देवान् दृष्ट्वा सुरा जघ्नुर्दैत्यान् देवास्तथापरे ।
असम्बन्धं महायुद्धं चक्रिरे सुरदानवाः ॥ १२॥

शस्त्रैः शस्त्राणि संवार्य तथास्त्रैरस्त्रसञ्चयम् ।
मल्लयुद्धं महावीराश्चक्रुस्तत्र मदान्विताः ॥ १३॥

सङ्ग्रामे तुमुले तत्र प्रवृत्ते घोररूपिणि ।
मृता मुमूर्षवः केचिच्छिन्नभिन्नास्तथाऽभवन् ॥ १४॥

नानाजन्तुशरीरेभ्यः प्रवृत्ता रक्तसम्भवा ।
नदी बभौ महाघोरा मांसकर्दमशालिनी ॥ १५॥

रक्ता चास्थिबलाका च केशशैवालशोभिता ।
चापसर्पाशिरःपद्माकबन्धद्रुमवाहिनी ॥ १६॥

भल्लकाष्ठा महाघोरा चामरैस्तृणकैर्युता ।
छत्रावर्ता दुर्गमा च चर्मपट्टिशदर्दुरा ॥ १७॥

भीरुभीतिकरा चैव वीरहर्षप्रवर्धिनी ।
तां दृष्ट्वा दैत्यराजास्ते क्रोधयुक्ताः समाययुः ॥ १८॥

तैः समन्ताद्बलं भग्नं देवानां सर्वमञ्जसा ।
बाणजालैर्दिशो व्याप्ता गन्तुं मार्गो न विद्यते ॥ १९॥

पलायनपरा देवाः सर्वे दशदिशोऽगमन् ।
तद् दृष्ट्वा देवराजास्तान् वारयामासुरोजसा ॥ २०॥

द्वन्द्वयुद्धं च तत्रासीत्परस्परविनाशनम् ।
देवानां मुख्यदैत्यानां किञ्चित्तेषां वदामि ते ॥ २१॥

नमुचिः कामदेवेन युयुधे बलसंयुतः ।
शम्बरो वायुना सार्द्धं शुम्भो देव्या महाबलः ॥ २२॥

चन्द्रेणाऽपि निशुम्भश्च गुहेन च विरोचनः ।
कालभैरवदेवेन कालभैरवदानवः ॥ २३॥

महिषासुरदैतेयः कालाग्न्यारूपहरेण च ।
प्रह्लादो विष्णुना सार्धं विप्रचित्तिश्च भानुना ॥ २४॥

अन्धकासुरनामा च वीरभद्रेण संयुतः ।
अग्निना चैव दुर्बुद्धिर्युयुधे बलसंयुतः ॥ २५॥

विषयप्रिय एवाऽसौ ब्रह्मणा युयुधे भृशम् ।
शम्भुना युयुधे तत्र सुन्दरप्रिय एव सः ॥ २६॥

(Page खं. १ अ. ३० पान ६९)
मत्सरासुरदैत्येशो युद्धं द्रष्टुं स्थितोऽभवत् ।
एवं नानाद्वन्द्वयुद्धं शतशोथ सहस्रशः ॥ २७॥

सङ्ख्यातुं नैव शक्यं तदपारत्वात् प्रजापते ।
शस्त्रास्त्रैरसुरा जघ्नुः सुरांस्तानपि ते सुराः ॥ २८॥

अग्निवाय्वादिकास्त्राणि तत्यजुः क्रोधसंयुताः ।
चकम्पे च त्रिभुवनं दारुणे संयुगे तदा ॥ २९॥

देवासुरप्रणाशश्च महांस्तत्र प्रवर्तितः ।
शोणितौघैः प्रवृत्तास्तु नद्यः परमदारुणाः ॥ ३०॥

एवं सप्त दिवानक्तं गतं तेषां प्रयुध्यताम् ।
नासुरा न च देवास्ते विरामं चक्रुरञ्जसा ॥ ३१॥

ततश्च कुपिता देवा अत्यन्तं शङ्करादयः ।
दैत्यानामस्त्रसङ्घातानस्त्रैः संवार्य तान् पुनः ॥ ३२॥

ताडयामासुरव्यग्रा अस्त्रैर्नानाविधैः परम् ।
मूर्छितान् पतितांश्चक्रुर्मृतान् सञ्चूर्णितान् परान् ॥ ३३॥

ततो दश दिशो दैत्या वव्रजुर्भयसङ्कुलाः ।

त्रिशूलादि महाशस्त्रैस्तत्रापि तु सुरा बभुः ॥ ३४॥

सुन्दरप्रियकाद्याश्च मूर्च्छिता धरणीं गताः ।
मृतप्रायाः कृतास्तैस्ते विष्ण्वादिभिरथो मुने ॥ ३५॥

तद् दृष्ट्वा क्रोधसंयुक्तो मत्सरः स्वयमाययौ ।
कृत्वा नादं महाघोरं ब्रह्माण्ड कम्पयन्निव ॥ ३६॥

धनुश्चक्रे सनादं वै तेन संशयिताः सुराः ।
बाणवृष्टिं ससर्जासौ दारुणां शत्रुनाशिनीम् ॥ ३७॥

तस्य बाणैः सुराः सर्वे मर्दिता बलवत्तरम् ।
मृताः केचित् क्षताः केचिन् मूर्च्छिता पतिता मृधे ॥ ३८॥

पञ्चबाणैश्च सेनान्यं ताडयामास वक्षसि ।
पतितः स धरापृष्ठे मूर्च्छितो भृशविह्वलः ॥ ३९॥

अग्निं च सप्तभिर्बाणैर्नन्दिनं दशभिस्तथा ।
ताडयामास दैत्येन्द्रः पतितं रणमूर्धनि ॥ ४०॥

दशभिर्वीरभद्रं स सवितारं ततोष्टभिः ।
चन्द्रं च सप्तभिर्बाणैः पातयामास दैत्यपः ॥ ४१॥

अनिलं नवभिश्चैव कालाग्निं रुद्रमष्टभिः ।
दशभिश्च महाकालीं ताडयामास मत्सरः ॥ ४२॥

पञ्चभिः पञ्चभिश्चैव गणपान् भृङ्गिमुख्यकान् ।
बाणैः स पातयामास प्रलयाग्निसमद्युतिः ॥ ४३॥

कुबेरं दशभिश्चैव ताडयामास वक्षसि ।
ब्रह्माणं शतबाणैश्च पातयामास भूतले ॥ ४४॥

एवं तस्याद्भुतं कर्म दृष्ट्वा विष्णुः समाययौ ।
बाणैः सहस्रसङ्ख्याकैर्ववर्षे घनवद् भृशम् ॥ ४५॥

दैत्यो बाणान्निवार्यैव तैः शरैः क्रोधसंयुतः ।
शतेन ताडयामास पतितः स धरातले ॥ ४६॥

ततश्च शङ्करः क्रुद्धस्त्रिशूलेनाहनद् भृशम् ।
त्रिशूलं निष्फलं तत्र पतितं धरणीतले ॥ ४७॥

पाशं दैत्यपतिः क्षिप्त्वा सहसा शङ्करं ततः ।
गृहीत्वा पशुवत् कण्ठे आनयामास सन्निधौ ॥ ४८॥

धृत्वा शम्भुं महाबाहुर्वदति स्म च तं मुने ।
अतुलं किं त्वया मेऽद्य दत्तं वद सदाशिव ॥ ४९॥

कर्मणा त्वं समर्थश्च तथाहं कर्मणा किल ।
जगदीश्वरतां प्राप्तो वृथाहङ्कारवानसि ॥ ५०॥

(Page खं. १ अ. ३१ पान ७०)
क्रमेण विष्णुमुख्याश्च देवान् धृत्वा महाबलः ।
कैलासशिखरे रम्ये रेमे दैत्यसमन्वितः ॥ ५१॥

सर्वपूज्यतमो भूत्वा दैत्यः परमहर्षितः ।
नानाकौतुकयुक्तश्च भोगांश्च बुभुजे परान् ॥ ५२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते शिवादिपराजयो नाम त्रिंशोऽध्यायः ॥ १.३०

## १.३१ दत्तात्रेयसङ्गमो नामैकत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
शृणु दक्ष महाश्चर्यं दैत्यस्य च विचेष्टितम् ।
ब्रह्माण्डाधिपतिर्जातो मत्सरः कर्मणा स्वयम् ॥ १॥

सुन्दरप्रियपुत्रं च कैलासाधिपतिं ततः ।
चक्रे वैकुण्ठनाथं तं पुत्रं स्वं विजयप्रियम् ॥ २॥

प्रह्लादं सत्यलोकेशं माहेन्द्रेशं विरोचनम् ।
एवं चक्रे च राजेशः स्वर्गाधीशान् स दैत्यपान् ॥ ३॥

स्वयं भूमिं समागम्य नगरं निर्ममे ततः ।
मत्सरावासकं नाम तत्रैव न्यवसन्मुदा ॥ ४॥

त्रैलोक्यं वशगं सर्वं चकार स्वेन तेजसा ।
शिवादयश्च देवेन्द्रा गृहे तस्य समास्थिताः ॥ ५॥

तान् समानाय्य दैत्येशो हर्षयुक्तेन चेतसा ।

उवाच मधुरं वाक्यं सामयुक्तं महासुरः ॥ ६॥

शृणु शम्भो महाभाग देवेन्द्रैः सह देवप ।
यत्रेच्छा गच्छ तत्र त्वं मदाज्ञां पालयन् सदा ॥ ७॥

एवमुक्त्वा स दैत्येन्द्रो मोचयामास शङ्करम् ।
देवैः सह महाभागो मत्सरो हर्षसंयुतः ॥ ८॥

शिवोऽपि देवसङ्घातैः पर्वतद्रोणिमाश्रितः ।
चिन्ताविष्टो महादेवः कालं पश्यंश्च संस्थितः ॥ ९॥

यत्र तत्र गुहायां ते देवा विष्णुपुरोगमाः ।
संस्थिता भयभीताश्च दिवसानतिचक्रमुः ॥ १०॥

पृथिव्यां दैत्यराजेन ततो धर्मस्य खण्डनम् ।
कृतं सर्वत्र तेनैव हाहाकारोऽभवन् महान् ॥ ११॥

देवानां प्रतिमा यत्र तां भङ्क्त्वा चिक्षिपुर्जले ।
दैत्यास्तदाज्ञया दक्ष धर्मलोपं प्रचक्रिरे ॥ १२॥

मत्सरस्य च दैतेयाः प्रतिमाः सर्वभावतः ।
देशे देशे पुरे ग्रामे स्थापयामासुरञ्जसा ॥ १३॥

गृहे गृहे च देवानां प्रतिमां संस्थितां पराम् ।
तां भङ्क्त्वा जलमध्ये ते चिक्षिपुश्च प्रजापते ॥ १४॥

मत्सरप्रतिमां कृत्वा प्रतिगेहं ददुस्ततः ।
दैत्याः सुदारुणा विश्वं त्रासयामासुरेव च ॥ १५॥

ब्राह्मणांश्च समानीय ताडयामास मत्सरः ।
ममैव मन्त्रसूक्तेन यज्ञादि क्रियतां द्विजाः ॥ १६॥

मम नाम्ना च गायत्रीं युक्तां जपत मा चिरम् ।
अग्निहोत्रादिकं कर्म कुरुध्वं मन्मतं तथा ॥ १७॥

अहमेवेश्वरो देवो ब्राह्मणादि जनस्य च ।
भजतां मम पादौ च दुर्लभं किं भविष्यति ॥ १८॥

धनधान्यादिकं सर्वं स्वर्गभोगादिसंयुतम् ।
दास्यामि नात्र सन्देहो मदधीनं जगत्सदा ॥ १९॥

(Page खं. १ अ. ३१ पान ७१)
मम प्रीतिकरा येन दैत्या भोज्यैः प्रपूजिताः ।
तेन सन्तर्पितो नूनं वाञ्छितं पूरयाम्यहम् ॥ २०॥

एवमादि स सर्वत्र नानाधर्मनिकृन्तनम् ।
कारयामास दुर्बुद्धिर्मत्सरो मत्सरान्वितः ॥ २१॥

केचिदृषिगणा दक्ष वनं व्याघ्रादिसंयुतम् ।
जग्मुस्तत्र क्रियाः सर्वाश्चक्रुर्धर्मपरायणाः ॥ २२॥

देहरक्षणसक्ताश्च मुनयो भ्रंशमागताः ।
सर्ववर्णपरिभ्रष्टा जना जाताः प्रजापते ॥ २३॥

यजनं याजनं तत्र स्वधर्मादिस्वभावजम् ।
कर्म सर्वं न चक्रुस्ते जनास्तद्भयभाविताः ॥ २४॥

न स्वाहा न स्वधा कुत्र न वषट्कार आभवत् ।
वर्णसङ्करकृल्लोकाः स्थिता भयसमन्विताः ॥ २५॥

एवं पापस्य वृद्धिश्च सञ्जाता भयदायिनी ।
ततो देवगणाः सर्वे उपोषणनिपीडिताः ॥ २६॥

विचारं तत्र चक्रुस्ते मत्सरस्य विनाशने ।
न च किञ्चिद्भयोद्विग्ना नाशार्थं शेकुरोजसा ॥ २७॥

एतस्मिन्नन्तरे तत्र दत्तात्रेयः समाययौ ।
साक्षाद् ब्रह्ममयो योगी न्यस्तस्वपरविभ्रमः ॥ २८॥

मलिनो जडवल्लोके भ्रमति स्म पिशाचवत् ।
चेष्टितैश्चेष्टते नग्नो बालवद् द्वन्द्वकारकः ॥ २९॥

उन्मत्तवन्महाभागो भयं नैव प्रविन्दति ।
आत्रेयो गणराजस्य भक्तः परमशोभनः ॥ ३०॥

तं दृष्ट्वा देवसङ्घास्ते समुत्तस्थुः सुसादराः ।
प्रणेमुः कार्यसिध्यर्थं पूजयामासुरञ्जसा ॥ ३१॥

पादसंवाहनं तस्य चक्रुः केचन भावतः ।
फलादिना च नैवेद्यमर्पयामासुरादरात् ॥ ३२॥

पप्रच्छुर्भुक्तवन्तं तं विनयेन समन्विताः ।

शम्भुविष्णुमुखाः सर्वे भयभीता महामुनिम् ॥ ३३॥

शिव उवाच ।
स्वामिंस्त्वं द्वन्द्वहीनश्च नित्यमानन्दभाक् परः ।
न्यस्तस्वपरभावश्च तथाऽपि जनवत्सलः ॥ ३४॥

गणेशस्य वरो भक्तः साक्षाद्गणपतिः स्वयम् ।
योगभावेन सम्पन्नो योगी योगविदां वरः ॥ ३५॥

तथापि दुःखितान् दृष्ट्वा मनस्ते कलिलं भवेत् ।
उपाधिहीनभावेन दुःखनाशं करोषि वै ॥ ३६॥

अतो वयं महाभाग पीडिता मत्सरेण वै ।
भ्रष्टस्थाना वने सर्वे चरामः श्वापदा इव ॥ ३७॥

अत्राऽपि धर्मलोपेन पीडिता वयमुत्कटम् ।
उपोषणपराः स्वामिन् मरिष्यामो महामते ॥ ३८॥

अत्र ते दर्शनं प्राप्तं पूर्वपुण्यबलेन भोः ।
तेन दुःखविहीनाश्च भविष्यामो न संशयः ॥ ३९॥

अतो मत्सरदैत्यस्य नाशोपायं वद प्रभो ।
येन सर्वं जगत्क्लिष्टं तत् सुखं कुरु मानद ॥ ४०॥

एकस्य दोषयोगेन बहवः पीडिता यदि ।
अनुपाधितया योगी तं दोषं नाशयिष्यति ॥ ४१॥

शक्तश्चेत् स्वस्वभावेन सर्वेभ्यः सुखदायकः ।
अतस्त्वं रक्ष योगीश जगत् कृत्स्नं विशेषतः ॥ ४२॥

मुद्गल उवाच ।
शिवस्य वचनं श्रुत्वा देवान् दीनतमान् परान् ।
दृष्ट्वा स करुणायुक्तः प्रत्युवाच च हर्षयन् ॥ ४३॥

दत्तात्रेय उवाच ।
(Page खं. १ अ. ३२ पान ७२)
शृणु शम्भो जगन्नाथ त्वं साक्षादीश्वरः शिवः ।
तवाधीनमिदं सर्वं त्वां ब्रुवे किं महामते ॥ ४४॥

तथापि वच्मि देवेश त्वदाज्ञासम्प्रचोदितः ।

येन त्वं देवसंयुक्तः सुखं विन्दसि शाश्वतम् ॥ ४५॥

त्वदीये हृदये शम्भो मत्सरः संस्थितोऽधुना ।
ईश्वरोऽहमिदं सर्वं मदधीनं प्रवर्तते ॥ ४६॥

न मत्समस्त्रिभुवने इति यन् मत्सरः स च ।
जहि तं योगमार्गेण हृदयस्थं महासुरम् ॥ ४७॥

श्रेष्ठं दृष्ट्वा महेर्ष्या ते जायते या महामते ।
जहि तां तपसा शम्भो गणेशस्य प्रसेवया ॥ ४८॥

एकाक्षरविधानेन मयाऽसौ सेवितः पुरा ।
तेनाऽहं च गणाधीशो न भिन्नौ मयि तिष्ठतः ॥ ४९॥

अतस्त्वं योगमार्गेण गणेशं सर्वसिद्धिदम् ।
एकाक्षरविधानेन तमाराधय यत्नतः ॥ ५०॥

हृदिस्थं मत्सरं हत्वा पश्चात्तं जहि दानवम् ।
योगेन त्वं समर्थो हि भविताऽसि न संशयः ॥ ५१॥

एवमुक्त्वा महादेवं गतोऽसौ मुनिसत्तमः ।
यदृच्छया चरन् सन् वै सेवते गणनायकम् ॥ ५२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
प्रथमे खण्डे वक्रतुण्डचरिते दत्तात्रेयसङ्गमो नामैकत्रिंशोऽध्यायः ॥ १.३१

## १.३२ वक्रतुण्डप्रादुर्भावो नाम द्वात्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
शृणु दक्ष महाप्राज्ञ चेष्टितं परमं महत् ।
यत्कृतं सर्वदेवैस्तत् कथयामि समासतः ॥ १॥

गते मुनौ महाभागे शिवो हर्षसमन्वितः ।
गणेशं हृदि सञ्चिन्त्य ब्रह्मादींश्च वचोऽब्रवीत् ॥ २॥

शृणु विष्णो विधे देवाः शृणुध्वं सर्वतापसाः ।
ऋषयः संस्थिता अत्र वचनं हितकारकम् ॥ ३॥

आत्रेयेण च दत्तेनं कथितं दुःखनाशनम् ।

अत एकाक्षरेणैव प्रसादयत विघ्नपम् ॥ ४॥

शम्भोर्वचनमाकर्ये मुनयो देवनायकाः ।
साधुसाध्वब्रुवन् सर्वे प्रसन्नाश्च तथाऽभवन् ॥ ५॥

तत एकाक्षरेणैव मन्त्रेण गणपं मुने ।
देवाश्च मुनयः सर्वे सेवयामासुरादरात् ॥ ६॥

महोग्रतपसा युक्ताः स्थितास्तत्र शिवादयः ।
आराधयंस्तु देवेशं गणेशं सर्वनायकम् ॥ ७॥

पद्मासनगताः केचिद्वीरासनगताः परे ।
स्वस्तिकासन आसीना एवं नानासने स्थिताः ॥ ८॥

निराहारतया केचित् स्थितास्तत्र प्रजापते ।
पत्रवायुभुजश्चान्ये प्राणायामपरायणाः ॥ ९॥

जलभक्ष्याः स्वपादाग्रस्थिताः केचिद् दृढासनाः ।
केचिन्मानसपूजाभिः पूजयामासुरञ्जसा ॥ १०॥

(Page खं. १ अ. ३२ पान ७३)
केचित् पुष्पोपहाराद्यैर्यत्नतः समपूजयन् ।
प्रदक्षिणापराः केचिदेवं नानाविधानतः ॥ ११॥

तपन्तो गणपं चैव मन्त्रेण विधिपूर्वकम् ।
एकचित्तेन सर्वे ते तोषयामासुरञ्जसा ॥ १२॥

एवं वर्षसहस्रेण दिव्येन तपसा स्वयम् ।
प्रसन्नोऽभून् महातेजा वक्रतुण्डः प्रतापवान् ॥ १३॥

देवानां च ऋषीणां च ययौ चाग्रे गणाधिपम् ।
तेजसा पुञ्ज एवाऽसौ साक्षाद् ब्रह्ममयो बभौ ॥ १४॥

सिंहगो गजवक्त्रश्च शूर्पकर्णो महोदरः ।
चतुर्बाहुश्च पाशेनाङ्कुशेन वरदेन च ॥ १५॥

अभयेन समायुक्तो वामाङ्गे सिद्धिधारकः ।
दक्षिणाङ्गे च बुद्धिं वै दधानो भगवान् परः ॥ १६॥

नाभिशेषो मुकुटवान् कुण्डली कटकान्वितः ।
चिन्तामणिलसद्वक्षा व्यालयज्ञोपवीतवान् ॥ १७॥

नानाभूषणशोभाढ्यस्तेजसा ज्वलदद्भुतः ।
पुष्करं पुष्करे धृत्वा भ्रामयन् समुपाययौ ॥ १८॥

तं दृष्ट्वा देवविप्रास्ते भयभीताः समन्ततः ।
उदितं किमिदं तेजः प्रलयानलसन्निभम् ॥ १९॥

अथवा गणराजोऽयं किं वा स्वामी समागतः ।
अथवा प्रलयो भावी अकाले दैवनिर्मितः ॥ २०॥

इति तर्कसमायुक्तान् देवान् मुनिसमन्वितान् ।
उवाच वक्रतुण्डस्तान् मेघगम्भीरनिस्वनः ॥ २१॥

वक्रतुण्ड उवाच ।
भो भो मुनिगणा देवाः स एवाऽहं समागतः ।
यं ध्यायथ महाभागास्तं जानीत गणेश्वरम् ॥ २२॥

तपसा मन्त्रराजेन मम ध्यानेन सर्वशः ।
परितुष्टो वरं दातुमागतोऽहं न संशयः ॥ २३॥

मुद्गल उवाच ।
वक्रतुण्डवचः श्रुत्वा हर्षिता अमरर्षयः ।
प्रणेमुः प्रार्थयामासुः सौम्यभावं प्रविह्वलाः ॥ २४॥

तेषां प्रार्थितमाकर्ण्य सौम्यतेजा अभूत् प्रभुः ।
यथा तं मुनयो देवा अपश्यन् स्वेन चक्षुषा ॥ २५॥

सौम्यभावेन संयुक्तं वक्रतुण्डं सुरेश्वराः ।
मुनयस्तं प्रणम्योचुर्धन्या धन्या वयं प्रभो ॥ २६॥

अपूजयन् प्रयत्नेन भावेन स्नेहतस्तथा ।
उपचारैः षड्दशभिर्यथाविधि महेश्वराः ॥ २७॥

यथाविधि प्रणम्यैव तुष्टुवुः कृतमङ्गलाः ।
बद्धाञ्जलिपुटाः सर्वे भक्तिनम्रात्मकन्धराः ॥ २८॥

साश्रुनेत्राः सरोमाञ्चास्तद्दर्शनमहोत्सवाः ।
यथाज्ञानं यथान्यायं वक्रतुण्डं महौजसम् ॥ २९॥

देवर्षय ऊचुः ।

नमस्ते वक्रतुण्डाय गजवक्राय ते नमः ।
एकदन्ताय देवाय सर्वाधिपतये नमः ॥ ३०॥

निर्गुणाय निरूपाय चतुर्बाहुधराय ते ।
सिंहवाहाय नागानां पत्युर्नाभौ धराय च ॥ ३१॥

अनन्ताय ह्यपाराय दुर्लक्ष्याय नमो नमः ।
पाशाङ्कुशधरायैव नागयज्ञोपवीतिने ॥ ३२॥

वरदाभयहस्ताय सिद्धिबुद्धिवराय च ।
ब्रह्मभूताय भक्तानां ब्रह्मभूयकराय ते ॥ ३३॥

नमस्ते शम्भुरूपाय विष्णुरूपाय ते नमः ।
सूर्यरूपाय धात्रे च नमः शक्तिमयाय च ॥ ३४॥

दैत्यदानवरूपाय देवरूपधराय च ।
नमः पक्षिस्वरूपाय शुकरूपाय ते नमः ॥ ३५॥

ग्रहनक्षत्ररूपाय लतावृक्षस्वरूपिणे ।
(Page खं. १ अ. ३२ पान ७४)
पर्वताय नमस्तुभ्यं सरित्सागररूपिणे ॥ ३६॥

जलजन्तुस्वरूपाय सर्परूपाय ते नमः ।
वेदाधिकाशीतिलक्षयोनिसंस्थाय ते नमः ॥ ३७॥

चराचरमयायैव नमो नानाप्रभेदिने ।
कर्माकर्मस्वरूपाय नमः खलु विकर्मणे ॥ ३८॥

ज्ञानयोगाय देवाय स्वात्मरूपधराय ते ।
स्वसंवेद्यस्वरूपाय सदा योगमयाय ते ॥ ३९॥

नानाधारप्रधाराय शब्दब्रह्ममयाय ते ।
मायारूपाय मायायै मायाहीनाय ते नमः ॥ ४०॥

मायिभ्यो मोहदात्रे च सर्वकाराय ते नमः ।
स्थूलसूक्ष्मादिभेदाय भेदहीनाय ते नमः ॥ ४१॥

भेदाभेदमयायैवानन्तपाराय ते नमः ।
भक्तेभ्यो वरदात्रे च भक्तसंरक्षकाय ते ॥ ४२॥

नमो नमः परेशायाव्ययाय च नमो नमः ।

गणेशाय नमस्तुभ्यं योगाधीशाय ते नमः ॥ ४३॥

यं स्तोतुं न समर्थाश्च वेदाः साङ्गाश्च योगिनः ।
तं किं स्तुमो गणेशानं वक्रतुण्डस्वरूपिणम् ॥ ४४॥

मायादुःखं च सर्वेषां मनसि ज्ञानकारकम् ।
ब्रह्म तस्मात्तथा वक्रं ज्ञानहीनं बुधैः स्मृतम् ॥ ४५॥

माया च ब्रह्मतुण्डं यद् द्वयोर्योगे भवेत्परम् ।
योगशान्तिश्च सर्वेषां योगिनां हृदि संस्थिता ॥ ४६॥

मायादेहस्वरूपा ते ब्रह्म वक्रं स्मृतं मुखम् ।
उभयोर्योगभावे त्वं वक्रतुण्डः प्रकथ्यते ॥ ४७॥

तं वक्रतुण्डं पश्यामः साक्षाद् योगमयं परम् ।
धन्या वयं गणाध्यक्षं स्तुत्वा तं प्रणताः स्तवैः ॥ ४८॥

धन्यं जन्म त्वक्षि धन्यं धन्याः सम्पद एव च ।
ज्ञानं धन्यं तपश्चैव येन दृष्टो गजाननः ॥ ४९॥

प्रसन्नो यदि देवेश यदि देयो वरः शुभः ।
तदा त्वदीयपादाब्जे भक्तिरस्तु सदा च नः ॥ ५०॥

प्रार्थयामो वरं चैतं यतस्त्वं चिन्तितार्थदः ।
मत्सरासुरनाशं च वक्रतुण्ड कुरु प्रभो ॥ ५१॥

जगत्सर्वं वयं चैव पीडितास्तेन विघ्नप ।
सर्वेषामुपकारार्थं जहि दैत्यं महाबलम् ॥ ५२॥

स्तुत्वैवं प्रार्थयित्वा तं प्रणतास्ते सुरर्षयः ।
तानुत्थाप्य स्वयं साक्षाद्वक्रतुण्ड उवाच ह ॥ ५३॥

वक्रतुण्ड उवाच ।
भवत्कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं परम् ।
भविष्यति महाभागा ईप्सितार्थप्रदं महत् ॥ ५४॥

मत्सरासुरनाशं च करिष्यामि सुरर्षयः ।
भवतां भक्तियोगेन प्रसन्नः पूर्णतां गतः ॥ ५५॥

पञ्चभूतमयं सर्वं त्रिगुणं जगदुच्यते ।
अष्टावरणसंयुक्तं ब्रह्माण्डं हि सुरर्षयः ॥ ५६॥

अष्टावरणसंयुक्ता देवाः सर्वे च मानवाः ।
नागाश्चराचरं सर्वं तस्य तेभ्यो भयं नहि ॥ ५७॥

अतो मत्सरदैत्यस्य नाशश्च कठिनो महान् ।
तथापि भवतां देवाः करिष्यामि प्रियं द्विजाः ॥ ५८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
प्रथमे खण्डे वक्रतुण्डचरिते वक्रतुण्डप्रादुर्भावो नाम द्वात्रिंशोऽध्यायः ॥ १.३२
(Page खं. १ अ. ३३ पान ७५)

## १.३३ मत्सरासुरविचारणं नाम त्रयस्त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
एवमुक्त्वा सुरान् विप्रान् सस्मार बलमुत्कटम् ।
तस्य स्मरणमात्रेण प्रादुर्भूता गणाः प्रभोः ॥ १॥

प्रमोदामोदकाद्याश्च वक्रतुण्डा गजाननाः ।
चतुर्बाहुधराः सर्वे नानाशस्त्रास्त्रपाणयः ॥ २॥

केचित् सिंहसमारूढाः केचिन्मूषकवाहनाः ।
केचिन्मयूरमारूढाः शेषारूढास्तथापरे ॥ ३॥

अश्वारूढास्तथान्ये च मुकुटैः सुविराजिताः ।
कटकैः कुण्डलैश्चैव नानाभूषणराजिताः ॥ ४॥

भयङ्कराश्च शत्रूणां भक्तेभ्यः सुखदायकाः ।
महात्मानो महाशब्दा ब्रह्माण्डस्फोटकारकाः ॥ ५॥

नानाक्रीडासमायुक्ताः सदा स्वानन्दभाविताः ।
गणेशनाममाहात्म्यं कथयन्तः परस्परम् ॥ ६॥

वक्रतुण्डं नमस्कृत्य स्थिताः प्राञ्जलयोऽभवन् ।
आज्ञां कुरु गणाध्यक्ष करवामस्तवेप्सितम् ॥ ७॥

अस्माकं स्मरणं देव किमर्थं कृतमादरात् ।
दासान् त्वदीयपादस्य करिष्यामोऽखिलान् जनान् ॥ ८॥

तेषां वचनमाकर्ण्य वक्रतुण्डः प्रतापवान् ।
उवाच तान् महाभागान् मेघगम्भीरनिस्वनः ॥ ९॥

वक्रतुण्ड उवाच ।
शृणुध्वं मोदकाद्याश्च मत्सरासुरदैत्यपम् ।
हनिष्यामि महावीर्यं तेन युद्धं भविष्यति ॥ १०॥

अधुना दारुणं तत्र मया सह महाबलाः ।
एतदर्थं विशेषेण स्मरणं भवतां कृतम् ॥ ११॥

वक्रतुण्डवचः श्रुत्वा सर्वे हर्षसमन्विताः ।
गणा ऊचुः प्रणम्यैनं निबद्धकरसम्पुटाः ॥ १२॥

गणा ऊचुः ।
स्वामिन् वदसि यत्सर्वं तदाश्चर्यमयं बहु ।
मत्सरासुरनाशश्च एकेन क्रियतेऽधुना ॥ १३॥

त्वत्प्रसादात् सदा सर्वं सुलभं नो गणाधिप ।
आज्ञां कुरु महाभाग पश्य चैकस्य पौरुषम् ॥ १४॥

गणानां तद्वचो रम्यं श्रुत्वा प्राह गणाधिपः ।
वक्रतुण्डः प्रसन्नात्मा हर्षयन् सकलानिव ॥ १५॥

वक्रतुण्ड उवाच ।
भवद्भिः कथितं सर्वं तत्तथा न तदन्यथा ।
क्रीडार्थं निर्मितो दैत्यो मया मायाप्रभावतः ॥ १६॥

यदि क्षणेन तं दैत्यं नाशयामि प्रभावतः ।
तदा क्रीडा कथं देवा मया प्रक्रियते परा ॥ १७॥

अतस्तेन महाभागा युध्यध्वं मम सन्निधौ ।
अष्टावरणहीनेन हन्मि रूपेण तं क्षणात् ॥ १८॥

इति तस्य वचः श्रुत्वा गणा हर्षसमन्विताः ।
जगर्जुर्नादयन्तस्ते दिशो विदिश एव च ॥ १९॥

तद् दृष्ट्वा परमाश्चर्यं विस्मितास्ते सुरर्षयः ।
हर्षेण महता युक्ता मेनिरे मत्सरं हतम् ॥ २०॥

ततः सर्वान् समादाय गणान् देवान् मुनीनपि ।

वक्रतुण्डो ययौ तां च पुरीमीर्ष्याह्वयां पराम् ॥ २१॥

यत्र राज्यं च कुरुते मत्सरः स प्रतापवान् ।
ब्रह्माण्डस्य महावीरो नानाभोगसमन्वितः ॥ २२॥

देवाङ्गनापरिवृतः सदा तिष्ठति दैत्यपः ।
मद्यादिपानसंयुक्तो नानावीरपालितः ॥ २३॥

यद्यन्मनसि तेनापि चिन्तितं सफलं सदा ।
तत्तद्भवति सर्वं स्म तपसा वरदानतः ॥ २४॥

(Page खं. १ अ. ३३ पान ७६)
न बुबोध गतं कालं कालेनेव च वञ्चितः ।
धन्योऽहम्मन्यमानो न मत्समो मानसेऽपरः ॥ २५॥

एकस्मिन् दिवसे तत्र सभायां संस्थितोऽभवत् ।
वीरैः परिवृतो नाना नृत्यं पश्यन् विनोदतः ॥ २६॥

तत्राकाशात्तदा वाणी बभूव भयदायिका ।
आगतो मत्सरं हन्तुं वक्रतुण्डो महाबलः ॥ २७॥

श्रुत्वाऽऽकाशभवां वाणीं मूर्च्छितो मत्सरासुरः ।
पतितः शुष्ककण्ठश्च कम्पमानाङ्गविह्वलः ॥ २८॥

तं तथा पतितं दृष्ट्वाऽसुराः सर्वे भयातुराः ।
केनोक्तं परुषं वाक्यं हन्मस्तं त्वद्य निश्चितम् ॥ २९॥

ततः केचिन्नभोमार्गे बभ्रमुर्यत्र तत्र ते ।
ददृशुस्तं न तत्रापि सभायां पुनराययुः ॥ ३०॥

सर्वैः कृतः स दैत्येशः सावधानो यथा पुरा ।
उपविष्टः सभामध्ये हृदयेन विदूयता ॥ ३१॥

उवाच हि स्वतो वाचं मत्सरो भयविह्वलः ।
वचनं किमिदं सत्यमनृतं वा भविष्यति ॥ ३२॥

कालस्य कालरूपोऽहं मम मृत्युः कथं भवेत् ।
असत्या नभसो वाणी न ज्ञाता न श्रुताऽपि च ॥ ३३॥

अष्टावरणसंयुक्तं ब्रह्माण्डं सर्वमञ्जसा ।
अष्टावरणयुक्तेभ्यो मम मृत्युर्न जायते ॥ ३४॥

कोऽसौ वक्राननो जन्तुः कथितः कुत्र वर्तते ।
तं हनिष्यामि दृश्यश्चेत् क्षणमात्रान्न संशयः ॥ ३५॥

इति श्रुत्वा वचस्तस्य मत्सरस्य दुरात्मनः ।
ऊचुः प्रह्लादमुख्यास्तं विनयेन समन्विताः ॥ ३६॥

प्रल्हादादय ऊचुः ।
मा कुरुष्व महाभाग चिन्तां शत्रुनिषूदन ।
तव मृत्युः कथं भावी पश्चात् सूर्योदयः कथम् ॥ ३७॥

अस्माकं शत्रुभावेन स्थिता देवाः सहेश्वराः ।
जितास्तदपि सर्वे ते छिद्रदर्शिन एव च ॥ ३८॥

तैश्च माया कृता च स्यादीदृशी वाऽसुरोत्तम ।
अन्यथा ते महामृत्युः कथं भवति मानद ॥ ३९॥

नेयमाकाशवाणी भोस्तस्माद्देवान् सहेश्वरान् ।
हनिष्यामोऽद्य दैत्येश शत्रुहीनास्तदा वयम् ॥ ४०॥

तेषां वचनमाकर्ण्य मत्सरश्चैव हर्षितः ।
सत्यमुक्तं भवद्भिर्यद्धन्तव्यं विद्विषां वधे ॥ ४१॥

मत्सराज्ञां समादाय निःसृता दैत्यपुङ्गवाः ।
विचिन्वन्ति स्म सर्वत्र देवान् सर्वान् प्रयत्नतः ॥ ४२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते मत्सरासुरविचारणं नाम त्रयस्त्रिंशोऽध्यायः ॥ १.३३
(Page खं. १ अ. ३४ पान ७७)

## १.३४ देवासुरयुद्धप्रसङ्गो नाम चतुस्त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
दैत्या भ्रमणयुक्तास्ते आययुर्ढुण्ढिसन्निधौ ।
यत्र देवगणैर्युक्तो वक्रतुण्डः प्रतापवान् ॥ १॥

दृष्ट्वा तं वक्रतुण्डं ते भयभीतास्तदाऽभवन् ।

महाकायं महावीर्यं नरनागस्वरूपिणम् ॥ २॥

नानावीरैः परिवृतं प्रलयाग्निसमैः परैः ।
देवैर्हर्षसमायुक्तैः संस्तुतं भक्तिभावितैः ॥ ३॥

मनसा दैत्यपाः सर्वे मेनिरे मृत्युमात्मनः ।
सत्याकाशभवा वाणी सोऽयं वक्राननो भवेत् ॥ ४॥

वक्रतुण्ड जय त्वं वै जय त्वं जय सर्वदा ।
देवैः प्रकथ्यते तस्माद्वक्रतुण्डोऽयमागतः ॥ ५॥

यदि युद्धं करिष्यामोऽनेन सार्धं महाद्भुतम् ।
युद्धे वयं मृताश्चेद्वा वृत्तान्तं को निवेदयेत् ॥ ६॥

अतो मत्सरदैत्येशं गमिष्यामो जवान्विताः ।
एवं निश्चययुक्तास्ते मत्सरं जग्मुरादरात् ॥ ७॥

स देवो वक्रतुण्डस्तु दूरतः पञ्चयोजनम् ।
ईर्ष्यापूरं परित्यज्य स्थितः कृत्वा सभां प्रभुः ॥ ८॥

दैत्यास्ते मत्सरं गत्वा वृत्तान्तं तं न्यवेदयन् ।
भोराजन् सत्यमेवेदं वचनं खसमुद्भवम् ॥ ९॥

नरकुञ्जररूपेण दृष्टो वक्राननः प्रभुः ।
देवैः समावृतो भूप विचारं कुरु सर्वथा ॥ १०॥

तेषां वचनमाकर्ण्य मत्सरश्चिन्तयान्वितः ।
बभूव म्लानतुण्डश्च ज्ञात्वा शत्रुं महाबलम् ॥ ११॥

ततः क्रोधसमाविष्टस्तं हन्तुं कृतवान् मनः ।
आज्ञापयत् स दैत्येन्द्रान् सज्जिता भो भवन्त्विति ॥ १२॥

गमिष्यामि रिपुं हन्तुं वक्रतुण्डं महाबलम् ।
सदेवं सपरीवारं ततो हृदि सुखं भवेत् ॥ १३॥

आज्ञामात्रेण दैत्येशाः सन्नद्धाः समुपाययुः ।
हर्षेण महता युक्ता देवमर्दनलालसाः ॥ १४॥

चतुरङ्गं महत्सैन्यं निःसृतं नगराद्बहिः ।
तन्मध्ये मत्सरो वीरः शुशुभे रथसङ्गतः ॥ १५॥

आगतास्ते त्वराभाजो वक्रतुण्डः स्थितो यतः ।
तान् दृष्ट्वा देवसङ्घास्तं शशंसुर्गणनायकम् ॥ १६॥

स्वामिन् समागतो दैत्यः स्वयमेव महाप्रभो ।
यत्करिष्यसि देवस्त्वं त्वरया तत् कुरु प्रभो ॥ १७॥

अस्मान्नोचेच्च दैतेया हनिष्यन्ति महाबलाः ।
मरणं प्राप्तमस्माभिः कुत्र स्थातुं न शक्यते ॥ १८॥

देवानां वक्रतुण्डश्च श्रुत्वा वचनमादरात् ।
उवाच विस्मितो भूत्वा मा भयं कुरुत प्रियाः ॥ १९॥

स दैत्यं मत्सरं देवा हनिष्यामि न संशयः ।
पश्यन्तु कौतुकं युद्धे मदीयं परमाद्भुतम् ॥ २०॥

इत्युक्त्वा वक्रतुण्डः स सिंहारूढोऽभवत्प्रभुः ।
पाशाङ्कुशकरो गर्जन्मेघनादसमस्वनः ॥ २१॥

तस्य शब्देन सन्त्रस्तं त्रैलोक्यं सचराचरम् ।
भयभीता दैत्यगणा बभूवुश्च प्रजापते ॥ २२॥

मत्सरो हृदि सन्त्रस्तो वचनं चेदमब्रवीत् ।
दृश्यते प्रबला सेना किं भविष्यति दैत्यपाः ॥ २३॥

भययुक्तं वचस्तस्य श्रुत्वा तं दैत्यपा जगुः ।
वयं योत्स्यामहे स्वामिन् पश्य त्वं युद्धजं महः ॥ २४॥

इत्युक्त्वा मत्सरं सर्वे प्रह्लादप्रमुखाः सुराः ।
वक्रतुण्डं ययुर्वीरा नादयन्तस्त्रिविष्टपम् ॥ २५॥

(Page खं. १ अ. ३४ पान ७८)
बाणवृष्टिं महोग्रां ते चक्रुः क्रोधसमन्विताः ।
ववर्षुरस्त्रशस्त्राणि वर्षाकाले घना इव ॥ २६॥

तैरस्त्रैर्दैत्यराजैश्च हता सेना दिवौकसाम् ।
देवा विष्णुमुखास्तत्र युयुधुस्तान समागतान् ॥ २७॥

घोरयुद्धं ततस्तेषां देवासुरविनाशनम् ।
अभवद्दारुणं क्रूरं द्रष्टुं नैव प्रशक्यते ॥ २८॥

देवाश्च दानवाश्चैव युयुधुः शस्त्रपाणयः ।

मरणे निश्चयं कृत्वा परस्परजयेप्सवः ॥ २९॥

केचिद्बाणमयीं वृष्टिं चक्रुः शक्तीस्तु केचन ।
चिक्षिपुर्भिन्दिपालांश्च खड्गैर्वै चिच्छिदुः परे ॥ ३०॥

बबन्धुरपरे पाशैर्भल्लैर्वा विव्यधुः परे ।
गदायुद्धं महाघोरं चक्रिरे वीरसत्तमाः ॥ ३१॥

मुद्गरैश्च महावीरा मारयामासुरोजसा ।
मल्लयुद्धं परे चक्रुर्नादयन्तो दिशो दश ॥ ३२॥

सैन्यस्य रजसा सर्वं व्याप्तमासीद् दिगन्तरम् ।
नाभूत् स्वपरबोधोऽपि पुरोगान् जघ्निरे तदा ॥ ३३॥

शस्त्रैः शस्त्राणि संवार्य तथास्त्रैरस्त्रसञ्चयम् ।
बाणैर्बाणान् समारुष्टाश्चिच्छिदुस्ते परस्परम् ॥ ३४॥

शस्त्रे भग्ने च ते वीरा मल्लयुद्धं सुदारुणम् ।
चक्रिरे क्रोधसंयुक्ता मण्डलानि प्रबभ्रमुः ॥ ३५॥

हस्तेन हस्तमापीड्य पादैः पादान् प्रगृह्य च ।
कूर्परं कूपरेणैव मर्दयामासुरोजसा ॥ ३६॥

मस्तकं मस्तकेनैव जानुभ्यां जानुनी तथा ।
ललाटेन ललाटं च स्फालयामासुरञ्जसा ॥ ३७॥

एवं युद्धे प्रवृत्ते वै मृताः केचित्तु मूर्च्छिताः ।
भग्नाः केऽपि क्षता अन्ये नानाशस्त्रप्रहारतः ॥ ३८॥

शोणितौघवहा घोरा नदी जाता दुरत्यया ।
रक्तेन सर्वतस्तत्र रेणवो मज्जितास्ततः ॥ ३९॥

तेन प्रकाशितास्तत्र दिशः स्वपरबोधिकाः ।
ततोऽभूत्तुमुलं युद्धं यथायोग्यं प्रजापते ॥ ४०॥

रथिनो रथिभिः सार्धं गजिनो गजिभिस्तथा ।
अश्वारूढा हयारूढैः पदाताश्च पदातिभिः ॥ ४१॥

श्रेष्ठा युयुधिरे श्रेष्ठैर्महाबलसमन्वितैः ।
प्रबोध्य जघ्निरे केचिद्वीराः समरशालिनः ॥ ४२॥

परस्परमभिन्दंस्ते शस्त्रास्त्रैर्मर्मभेदिभिः ।
सर्वे शुशुभिरे चैव पुष्पिताः किंशुका इव ॥ ४३॥

कदाचिज्जयिनो देवाः कदाचिद्दानवास्तथा ।
न रात्रौ विश्रमं चक्रुः क्रोधयुक्ताः परस्परम् ॥ ४४॥

एवं पञ्चदिनं युद्धमभवत्तत्र दारुणम् ।
न जयं प्राप्नुयुर्देवा दैत्याचाऽपि प्रजापते ॥ ४५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते देवासुरयुद्धप्रसङ्गो नाम चतुस्त्रिंशोऽध्यायः ॥ १.३४
(Page खं. १ अ. ३५ पान ७९)

## १.३५ शिवविजयो नाम पञ्चत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
एवं परस्परं घोरं युद्धं कृत्वा महाबलाः ।
न जयं प्राप्नुवन्ति स्म कर्म चैव यथासुरम् ॥ १॥

तं दृष्ट्वा परमाश्चर्यं प्रह्लादः कुपितोऽभवत् ।
धनुः सज्जं महाघोरं कृत्वा बाणान् समाददे ॥ २॥

मन्त्रयन्ननलास्त्रेण चिक्षेप स शरान् बहून् ।
तेभ्यो जातो महानग्निः प्रलयानलसन्निभः ॥ ३॥

ददाह देवसेनां स प्रह्लादोऽसुरसत्तमः ।
भयभीताः सुराः सर्वे जज्वलुश्च समन्ततः ॥ ४॥

हाहाकारं प्रकुर्वन्तो दग्धास्ते जातवेदसा ।
मर्यादां रणभूमिं च तथा त्यक्त्वा पलायिताः ॥ ५॥

महाग्निः सर्वतस्तान् वै सुरान् वाहनसंयुतान् ।
प्रबलो दाहयामास प्रह्लादेन प्रचोदितः ॥ ६॥

तेन दैत्यगणाः सर्वे हर्षयुक्ता बभूविरे ।
प्रह्लादं पूजयन्तस्ते साधु साधु कृतं त्वया ॥ ७॥

सर्वान् पलायमानान् स सुरान् दृष्ट्वा पुरन्दरः ।

मेघास्त्रं योजयामास धनुषि क्रोधसंयुतः ॥ ८॥

एतस्मिन्नन्तरे तत्र प्रह्लादः समुपागतः ।
खड्गेन सहसेन्द्रस्य धनुश्चिच्छेद लाघवात् ॥ ९॥

तत इन्द्रः प्रकोपेन वज्रं तत्याज तं प्रति ।
वज्रेण निहतो भूमौ प्रह्लादः स पपात ह ॥ १०॥

पतितं तं तथा दृष्ट्वा महिषासुर आगतः ।
गदया देवराजं तं जघान खलु मस्तके ॥ ११॥

गदया निहतः सोऽपि पपात रणमूर्धनि ।
मघवा मूच्छितोऽत्यन्तं मुखाद्रक्तं समुद्वमन् ॥ १२॥

ततोऽग्निः परमक्रुद्धो जज्वाल ज्वालयासुरम् ।
महिषो जलरूपोऽभूत् प्लावयामास तं क्षणात् ॥ १३॥

निस्तेजाश्चिन्तया युक्ताः शक्तिं चिक्षेप पावकः ।
तां खड्गेन महादैत्यः पातयामास भूतले ॥ १४॥

ततो महिषरूपेण शृङ्गाभ्यां दहनं पुनः ।
चकार मूर्च्छितं क्रुद्धः पपात महसां निधिः ॥ १५॥

ततो ययौ यमस्तं वै दण्डघातेन सोऽहनत् ।
जक्रे सम्मूर्च्छितं दैत्यं महिषं भयदायकम् ॥ १६॥

एतस्मिन्नन्तरे तत्र प्रतापी च विरोचनः ।
खड्गेन तं जघानाशु यमं सर्वभयङ्करम् ॥ १७॥

पपात खड्गाघातेन यमो यमवतां प्रभुः ।
वरुणस्तं बबन्धापि पाशेन च विरोचनम् ॥ १८॥

ततस्तं मोचयामास पाशं छित्वा महाबलः ।
अन्धकः खड्गाघातेन गदया वरुणं तथा ॥ १९॥

मूर्च्छितं च चकाराऽभूदुत्थितः स विरोचनः ।
ततो वायुः कुबेरश्च तावुभौ क्रोधमूच्छितौ ॥ २०॥

वायुना खड्गघातेन मूर्च्छितस्त्वमितौजसा ।
अन्धकासुरनामाऽसौ पपात धरणीतले ॥ २१॥

शाम्बरेण हतो वायुर्मुसलेन महाबलः ।
स पपात तदा भूमौ देवः सर्वधरोऽपि सन् ॥ २२॥

विरोचनेने बाणौघैस्ताडितो धनरक्षकः ।
मर्मभेदिभिरत्युग्रैः पपाताऽसौ महाबलः ॥ २३॥

एतस्मिन्नन्तरे तत्र विष्णुः स्वयमुपागतः ।
गदया तं जघानैव विरोचनमथो रिपुम् ॥ २४॥

भिन्नोरसं च दैत्येशं मृततुल्यं चकार ह ।
अन्धकं चक्रघातेन पातयामास केशवः ॥ २५॥

(Page खं. १ अ. ३५ पान ८०)
शाम्बरं बाणजालैः सम्पातयामास भूतले ।
कुपितो माधवस्तत्र चक्रं तत्याज दारुणम् ॥ २६॥

चक्रेण क्षुरधारेण हता दैत्याः सहस्रशः ।
गदया मूर्च्छिताः केचिन् मुख्या ये तत्र संस्थिताः ॥ २७॥

एतस्मिन् समरे वीरः प्रह्लादः सम्बभूव ह ।
सावधानो महाभागस्तं ययौ क्रोधदीपितः ॥ २८॥

बाणवृष्टिं चकाराऽसौ महोग्रां देवनाशिनीम् ।
तया ताञ्च्छिन्नभिन्नाङ्गान् देवांश्चक्रे धरातले ॥ २९॥

गदया देवदेवेशं केशवं युयुधे भृशम् ।
खड्गेन मूर्च्छितं चक्रे गरुडं दैत्यनायकः ॥ ३०॥

ततश्च कुपितो विष्णुस्तं हन्तुं चक्रमाददे ।
बहुधा भ्रामयामास तत्त्याज ह्यस्त्रमुत्तमम् ॥ ३१॥

तन्मस्तकानि दैत्यानां चक्रं चिच्छेद सर्वतः ।
बाहूदरभुजांश्चैव चकार शकलीकृतान् ॥ ३२॥

सहसाऽसुरराजं च प्रह्लादं हन्तुमाययौ ।
चक्रं तेजोमयं दिव्यं समीपे ज्वलनप्रभम् ॥ ३३॥

प्रह्लादस्त्वरयास्त्रं च महाधनुषि सन्दधे ।
नारायणात्मकं चैव हृदि स्मृत्वा जनार्दनम् ॥ ३४॥

मुमोच तन् महास्त्रं वै तेजोरूपममोघकम् ।

अनिवार्यं जगद्भस्मकारकं कुपितः परः ॥ ३५॥

नारायणास्त्रवेगेन चक्रं प्रतिहतं ततः ।
देवान् सर्वान् ददाहापि महास्त्रं सर्वतः परम् ॥ ३६॥

हृदये सहसागत्य पतितं केशवस्य तत् ।
मूर्च्छितं मृततुल्यं तं चकार च जनार्दनम् ॥ ३७॥

ततो मदयुता दैत्या जगर्जुर्हर्षसंयुताः ।
प्रशशंसुर्महाभागं प्रह्लादं तेजसान्वितम् ॥ ३८॥

नारायणास्त्रसन्दग्धान् देवर्षीन् वीक्ष्य शङ्करः ।
क्षुभितो देवरक्षार्थं पिनाकं स्वकरे दधौ ॥ ३९॥

महास्त्रं तत् पाशुपतं सन्दधे क्रोधसंयुतः ।
बलेन मोचयामास त्वरावान् शङ्करोऽभवन् ॥ ४०॥

महास्त्रं वै पाशुपतं तथा नारायणात्मकम् ।
उभे अस्त्रे संयुगे ते युयुधाते विहायसि ॥ ४१॥

देवा मुनिगणास्तत्र हर्षयुक्ता बभूविरे ।
प्रशशंसुर्महादेवं देवदेवं च शङ्करम् ॥ ४२॥

ततः पशुपतिः क्रुद्धस्त्रिशूलं सन्दधे मुने ।
तत्याज दैत्यसेनायां कुर्वाणं प्रलयं परम् ॥ ४३॥

त्रिशूलं च करोति स्म मृतान् दैत्यान् सहस्रशः ।
प्रह्लादहृदयेकस्मात् पपात यमसन्निभम् ॥ ४४॥

तेनाऽसौ पतितो भूमौ वाताहत इव द्रुमः ।
दैत्यसैन्ये महानासीत्तदा कोलाहलः परः ॥ ४५॥

ततस्त्रिशूलवेगेन शितेन सहसाऽसुराः ।
मूर्च्छिताश्च कृताः केचित् केचिद्वै मारिता मुने ॥ ४६॥

सर्वेऽसुरगणास्तत्र पतिता रणमूर्धनि ।
ततो मत्सरपुत्रौ द्वौ शङ्करं जग्मतुः प्रभो ॥ ४७॥

सुन्दरप्रियनामा च विषयप्रिय एव यः ।
ऊचतुः शङ्करं तत्र क्रोधयुक्तौ महासुरौ ॥ ४८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते शिवविजयो नाम पञ्चत्रिंशोऽध्यायः ॥ १.३५

(Page खं. १ अ. ३६ पान ८१)

## १.३६ सुन्दरप्रियविषयप्रियवधो नाम षड्त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
वद ब्रह्मन्विशेषेण मम हर्षकरीं कथाम् ।
विस्तरेण महाभाग वक्रतुण्डप्रभावजाम् ॥ १॥

मुद्गल उवाच ।
न शक्यतेऽग्निपुत्रेण विस्तरेण पिनाकिना ।
शेषेण विधिना वक्तुं सङ्क्षेपेण ब्रवीम्यतः ॥ २॥

दक्ष उवाच ।
किमुक्तं दैत्यपुत्राभ्यां शङ्करेण श्रुतं वद ।
श्रुत्वा तत् किं कृतं तेन महादेवेन मानद ॥ ३॥

दैत्याभ्यां किं कृतं तत्र तद्वद त्वं विशेषतः ।
श्रुत्वा त्वद्वदनाम्भोजात् कथां तृप्याम्यहं न च ॥ ४॥

सूत उवाच ।
एवमादरमाज्ञाय दक्षस्य प्रयतात्मनः ।
मुद्गलस्तमुवाचाथ हर्षयुक्तः स शौनक ॥ ५॥

मुद्गल उवाच ।
दैत्यपुत्रौ महावीर्यौ शङ्करं क्रोधसंयुतौ ।
यदूचतुश्च तत्सर्वं शृणु दक्ष प्रजापते ॥ ६॥

मत्सरपुत्रावूचतुः ।
तिष्ठ तिष्ठ महादेव पश्य पौरुषमावयोः ।
ज्ञातं त्वदीयं सामर्थ्यं न च गन्तुं त्वमर्हसि ॥ ७॥

अस्मदीया महासेना हता सर्वा सदाशिव ।
दैत्येन्द्राः पातिताः सर्वे त्वया शङ्कर तेजसा ॥ ८॥

पौरुषं दर्शितं पूर्णं सर्वदेवातिगं महत् ।
अधुना त्वां हनिष्यावो वक्रतुण्डस्य पश्यतः ॥ ९॥

त्वां हत्वा वक्रतुण्डं च हनिष्यावो न संशयः ।
पश्चात् सर्वान् सुरेन्द्रांश्च ततो मुनिगणान् सुरान् ॥ १०॥

एवमुक्त्वा महादेवं धनुः सज्जं प्रचक्रतुः ।
तावुवाच महादेवः स्मयमान इदं वचः ॥ ११॥

शिव उवाच ।
भवद्भ्यां गदितं क्रूरं तत्सर्वं तथ्यमेव च ।
अधुनाऽयं समुत्पन्नो वक्रतुण्डो महाबलः ॥ १२॥

भूभारहरणार्थं वै भवतां नाशनाय च ।
अधुना स गतः कालो विपरीतेन कर्मणा ॥ १३॥

वक्रतुण्डप्रसादेन हनिष्यामि समत्सरम् ।
असुरं बलमत्यर्थं पापरूपं न संशयः ॥ १४॥

इत्युक्त्वा बाणवृष्टिं स चक्रे वै शङ्करः प्रभुः ।
महोग्रां कालरूपां वै प्रलयस्य प्रकाशिनीम् ॥ १५॥

तां च चिच्छिदतुर्दैत्यो स्वशरैरतिवगितैः ।
तौ मण्डपं क्षणेनैव चक्रतुः शरसम्भवम् ॥ १६॥

तद्बाणैरपि ते देवाश्छिन्ना भिन्नाः कृता मुने ।
शङ्करो विस्मितो भूत्वा शूलमुग्रं मुमोच ह ॥ १७॥

आगतं कालरूपं च शूलं दृष्ट्वा महासुरौ ।
महास्त्रं तौ पाशुपतं मोचयामासतुस्तदा ॥ १८॥

अनिवार्यं महोग्रं वै सर्वभस्मकरं परम् ।
जज्वाल तेजसा सर्वं ब्रह्माण्डं व्याकुलं ततः ॥ १९॥

त्रिशूलं निष्फलं तेन महास्त्रेण कृतं क्षणात् ।
शिवस्य हृदये गत्वा पपात भयदायकम् ॥ २०॥

मूर्च्छितः शङ्करस्तेन पतितो धरणीतले ।
हाहाकारश्च सर्वत्र देवसैन्ये ततोऽभवत् ॥ २१॥

पतितं शङ्करं दृष्ट्वा वक्रतुण्डो महाबलः ।

स्वां सेनां प्रेरयामास दैत्यमर्दनलालसः ॥ २२॥

गणेशदूतमुख्यास्तेष्वष्टौ तत्राययुः परे ।
स्वां स्वां सेनां समादाय महाकाया महाबलाः ॥ २३॥

प्रमोदश्चैष आमोदस्तथा ब्रह्मप्रियो मुने ।
योगप्रियश्च स्वानन्दभोक्ता ज्ञानमयश्च हि ॥ २४॥

सर्वगः सर्वविच्चैव क्रोधयुक्ताः समाययुः ।
तैः प्रेक्षिताः सुराः सर्वे गतमूर्च्छास्तदाऽभवन् ॥ २५॥

(Page खं. १ अ. ३६ पान ८२)
श्रमहीनाः क्षतादिभ्यो हीना जाताः प्रभावतः ।
तेजसा द्विगुणाश्चैव हृष्टपुष्टा यथा मुने ॥ २६॥

एतस्मिन्नन्तरे तत्र कविना जीवितास्तथा ।
दैत्याः समुत्थिताः सर्वे नीरुजश्च महाबलाः ॥ २७॥

प्रह्लादप्रमुखा वीराश्चक्रुर्नादं समन्ततः ।
ब्रह्माण्डमखिलं तेन सनादमभवत् परम् ॥ २८॥

ततो देवगणाः सर्वे शङ्खनादं प्रचक्रिरे ।
तेन दैत्यगणा भीता बधिरा इव ते स्थिताः ॥ २९॥

शङ्खानां चैव भेरीणां दुन्दुभीनां स्वरैः परैः ।
वीराणां क्ष्वेडितेनैव हेषितैर्बृंहितस्वनैः ॥ ३०॥

रथनेमिस्वनैः सर्वं व्याप्तमासीन्नभो मुने ।
परस्परं सम्पदं च वीक्ष्य वीक्ष्य च विस्मिताः ॥ ३१॥

एतस्मिन्नेव काले ते प्रमोदाद्या गणा ययुः ।
कुपिताः शस्त्रसंवृष्टिं चक्रिरे दैत्यमोहिनीम् ॥ ३२॥

तेषां शस्त्राणि सर्वाणि ह्यमोघानि महामुने ।
चिच्छिदुर्दैत्यराजानां मस्तकानि भुजादिकान् ॥ ३३॥

ब्रह्मप्रियो महाबाहुः शुक्रं धृत्वा प्रपश्यताम् ।
असुराणां गतो दूरं गुहायां चाक्षिपन् मुनिम् ॥ ३४॥

गतं शुक्रं तदा दृष्ट्वा दैत्याः सर्वे भयातुराः ।
हाहाकारं प्रचक्रुस्ते किं भविष्यति विह्वलाः ॥ ३५॥

रक्षिता गुरुरत्युग्रः पश्यतां नो महासुराः ।
नीतश्च मरणं तस्माच्छ्रेष्ठं किं न मृता वयम् ॥ ३६॥

अधुना क्व गमिष्यामस्तस्माद्युद्ध्यामहे वयम् ।
मरिष्यामोऽथ वा मोचयिष्यामस्तं स्वतेजसा ॥ ३७॥

परस्परं चेति दैत्या उक्त्वा मरणनिश्चयाः ।
उदायुधाश्च सर्वे ते युयुधुर्देवसैनिकैः ॥ ३८॥

व्यङ्गा देवाः कृतास्तैस्ते पतिता रणमूर्धनि ।
हाहाकारश्च सर्वत्र देवसैन्ये प्रवर्तितः ॥ ३९॥

ततो ब्रह्मप्रियाद्या ये कुपिताः शस्त्रधारिणः ।
परशुप्रमुखैः शस्त्रैस्त्रिशूलाङ्कुशपाशकैः ॥ ४०॥

शस्त्रैर्दैत्यान्निजघ्नुस्तान् कालरुद्रा इव प्रजाः ।
तैरस्त्रैर्दैत्यसेनायाः कदनं कृतमञ्जसा ॥ ४१॥

बहवश्च मृता दैत्या मूर्च्छिताश्चापरेऽवनौ ।
पेतुस्ते सर्वशो वीरा प्रह्लादप्रमुखा मुने ॥ ४२॥

ततो दैत्यकुमारौ तावागतौ रणमूर्धनि ।
ऊचतुस्तान् गणांस्तत्र प्रमोदाद्यान् महासुरौ ॥ ४३॥

दैत्यपुत्रावूचतुः ।
प्रमोदामोदकाद्याश्च भवद्भिर्बलमञ्जसा ।
हतं सर्वं च दैत्यानां दैत्यश्रेष्ठाः प्रमूर्च्छिताः ॥ ४४॥

अधुना मरणं प्राप्तं समीपे वः प्रदृश्यताम् ।
शस्त्रैस्तीक्ष्णैर्हनिष्यावो वक्रतुण्डयुतान् खलान् ॥ ४५॥

एवमुक्त्वा स्वबाणांस्तौ ववर्षतुरथासुरौ ।
ततस्तयोर्बलं वीक्ष्य द्वौ वीरौ समुपस्थितौ ॥ ४६॥

सर्वगः सर्वविच्चैव सबलौ धृतकार्मुकौ ।
बाणवृष्टिं तु संवार्य बाणांश्चिक्षिपतुः परान् ॥ ४७॥

अमोघाः सर्वबाणास्ते जग्मुः कालयमोपमाः ।
दैत्यान् सर्वान् प्रचकुस्ते छिन्नभिन्नात्मकान् मुने ॥ ४८॥

मृता मुमूर्षवः केचित्पतिता धरणीतले ।
अकस्माद्रक्तसम्भूता नदी तत्र प्रवर्तिता ॥ ४९॥

तयोर्बलं निरीक्ष्यैव कम्पितौ दैत्युपुङ्गवौ ।
अग्न्यस्त्रं धनुषि श्रेष्ठं दधतुः क्रोधसंयुतौ ॥ ५०॥

यावन् मुमुचतुस्तावत् परशू यमसन्निभो ।
(Page खं. १ अ. ३७ पान ८३)
आगतौ च शिरश्छेदं दैत्ययोश्चक्रतुः क्षणात् ॥ ५१॥

मत्सरस्य सुतौ वीक्ष्य मृतौ सर्वे भयातुराः ।
मत्सरं शरणं जग्मुरूचुर्वृत्तान्तमञ्जसा ॥ ५२॥

दैत्या ऊचुः ।
शृणु दैत्येश वृत्तान्तं रणभूमिसमुद्भवम् ।
महाभयङ्करं घोरं कथितुं शक्यते न च ॥ ५३॥

प्रह्लादप्रमुखाः सर्वे घातिता रणमूर्धनि ।
मृततुल्या मृता वा किमस्माभिर्ज्ञायते न च ॥ ५४॥

तव पुत्रौ महावीर्यौ मृतौ सङ्ग्राममण्डले ।
कृत्वा युद्धं महाघोरं परशुभ्यां महामते ॥ ५५॥

अकस्माद्वक्रतुण्डस्य गणौ द्वौ समुपस्थितौ ।
ताभ्यां चैव हतौ वीरौ स्वल्पकालेन दैत्यप ॥ ५६॥

वक्रतुण्डसमश्चैव न भूतो न भविष्यति ।
इति स्वान्ते च संज्ञाय देवं तं शरणं व्रज ॥ ५७॥

नोचेद्दैत्यगणाः सर्वे नाशं यास्यन्ति निश्चितम् ।
मा गर्वं कुरु दैत्येश दैत्यान् रक्ष महामते ॥ ५८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते सुन्दरप्रियविषयप्रियवधो नाम षड्त्रिंशोऽध्यायः ॥ १.३६

## १.३७ मत्सरासुरसमागमो नाम सप्तत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ।
मुद्गल उवाच ।

दैत्यानां वचनं श्रुत्वा स दैत्यो मत्सरासुरः ।
मूर्च्छितः सहसा भूमौ पपात भयविह्वलः ॥ १॥

अनिश्वसन् दैत्यपस्तु तैराशु विधृतो नृपः ।
सावधानं प्रचक्रुस्तं प्रयत्नैः परमैस्ततः ॥ २॥

द्विमुहूर्तेन सम्बुद्धो मत्सरः प्रललाप ह ।
किं जातं भावि वा किं वा दैवेन विफलं कृतम् ॥ ३॥

तपसा त्वमरत्वं च पृथिवीराज्यमञ्जसा ।
मया प्राप्तं स्वसामर्थ्यादतुलं तद् वृथा कृतम् ॥ ४॥

अहो हि बलवद् दैवं प्रयत्नो निष्फलो मतः ।
अचिन्त्या मेऽभयप्राप्तिः पश्चात् सूर्योदयो यथा ॥ ५॥

मृता दैत्या असङ्ख्याश्च मदर्थं नात्र संशयः ।
मृतौ पुत्रौ महाकालौ कालस्य कथमद्य तौ ॥ ६॥

अधुना शोकसन्तप्तो मरिष्यामि न संशयः ।
मृतौ पुत्रौ महाकालौ किं कार्यं जीवितेन मे ॥ ७॥

ब्रह्माण्डाधिपतेः पुत्रौ कथं तो निधनं गतौ ।
कथं मिथ्या हि जातं मे वरदानं महत्तरम् ॥ ८॥

अहो पुत्रौ महावीर्यौ कथं मरणमापतुः ।
याभ्यां स्वभुजवीर्येण जिता विष्णुमुखाः सुराः ॥ ९॥

अहो पुत्रौ च मां त्यक्त्वा घोरे दुःखार्णवे परे ।
क्व गतौ वदतं वाक्यमभूतं निष्ठुरौ कथम् ॥ १०॥

सखींश्च पितरं वृद्धं त्यक्त्वा मां सुन्दरप्रिय ।
विषयप्रिय मद्बलौ कथं मृत्युमुपस्थितौ ॥ ११॥

इति नानाविधं शोकं चक्रे दैत्येन्द्रपालकः ।
तं ते सभ्यवराः सर्वे सान्त्वयामासुरादरात् ॥ १२॥

वृद्धा ऊचुः ।
न रोदनं प्रकर्तव्यं त्वया दैत्येन्द्रनायक ।
रणे मृतौ महावीर्यौ कीर्तिं कृत्वा महत्तराम् ॥ १३॥

देहस्य मरणं नित्यं जन्म चैव तथा प्रभो ।

किं चित्रं तच्च सञ्जातं येन शोचसि दैत्यप ॥ १४॥

(Page खं. १ अ. ३७ पान ८४)
आत्मनो मरणं नैव जन्मशास्त्रेषु कथ्यते ।
मायामोहं परित्यज्य स्वस्थो भव महामते ॥ १५॥

जन्तोरूर्ध्वक्रिया सर्वा कर्तव्या स्वजनैरपि ।
अतस्त्वं दैत्यराजेन्द्र सार्थकं त्वेतयोः कुरु ॥ १६॥

अथवा तौ परित्यज्य वक्रतुण्डं जहि प्रभो ।
अथवा शरणं याहि येनैव कुशलं भवेत् ॥ १७॥

वीरा रुदन्ति कुत्रापि नैव जानीहि दैत्यप ।
सपत्नान् हर्षसंयुक्तान् मा कुरुष्वाधुना परान् ॥ १८॥

एवं प्रबोधितो दैत्यो मत्सरः क्रोधसंयुतः ।
आदाय सकलं सैन्यं ययौ सङ्ग्राममण्डलम् ॥ १९॥

मत्सरासुरमायान्तं दृष्ट्वा शम्भ्वादयः सुराः ।
भयभीताश्च तं प्रोचुर्वक्रतुण्डं प्रणम्य ते ॥ २०॥

स्वामिन् समागतो दैत्यो मत्सरः स प्रतापवान् ।
यस्याग्रे मशका देवास्तृणरूपा नरादयः ॥ २१॥

यस्याग्रे वशवर्तिन्यः श्रियः सर्वार्थदायिकाः ।
ब्रह्माण्डं कम्पते यस्य भयात्सोऽयं समागतः ॥ २२॥

यस्य राज्ये महाभागा जना दुःखविवर्जिताः ।
सर्वर्तुफलदा वृक्षा मेघाः कालप्रवर्षिणः ॥ २३॥

यस्याज्ञा वशगश्चासौ तपत्येव दिवाकरः ।
न शीतं प्रबलं तत्र मत्सरे राज्यभोगिनि ॥ २४॥

न रोगाः प्रचरन्तीह भयभीताः सम्मततः ।
न च चोरादिसन्त्रस्तं जगद्राज्यं प्रशासति ॥ २५॥

यस्य पूजा च सर्वत्र जगति क्रियते जनैः ।
यज्ञादि सर्वमखिलं भुक्तं येन महात्मना ॥ २६॥

कालो बिभेति यं दृष्ट्वा तदाज्ञा पालकोऽभवत् ।
कर्मखण्डनमप्यत्र कृतं येन सुरारिणा ॥ २७॥

न स्वाहा न स्वधा यत्र न वषट्कार एव च ।
न वेदाध्ययनाचारो मत्सरे राज्यकर्तरि ॥ २८॥

न स्नानादिक्रिया यत्र न स्वधर्मः स्वभावजः ।
न वर्णाश्रमयोर्धर्मो मत्सरे राज्यकर्तरि ॥ २९॥

देवाः श्वापदतुल्या वै भ्रमन्ति वनगोचराः ।
अन्नवस्त्रादिसंहीनाः कृता दैत्येन्द्रकेण भोः ॥ ३०॥

मुनयस्तपसा हीनाः शापसामर्थ्यहीनकाः ।
कृता मत्सरदैत्येन सोऽयं स्वामिन् समागतः ॥ ३१॥

देवाङ्गनाश्च तत्कन्या नागकन्या महात्मना ।
भुक्ता नानाविधा भोगाः सोऽयं मत्सर आगतः ॥ ३२॥

नरकन्याः पशोःकन्या मुनिकन्याः समाहृताः ।
बलेन न समं यस्य ब्रह्माण्डे सोऽयमागतः ॥ ३३॥

यस्याष्टावरणैर्मृत्युर्न भवेच्च कदाचन ।
सोऽयं समागतो दैत्यः पश्य पश्य गणाधिप ॥ ३४॥

इत्येवं ब्रुवतो देवान् वक्रतुण्डो महाबलः ।
मा भयं कुरुत प्राज्ञा हनिष्यामीति सोऽब्रवीत् ॥ ३५॥

सिंहारूढो महाबाहुरेकदन्तविराजितः ।
पाशाङ्कुशधरो भूत्वा ययौ सङ्ग्राममण्डलम् ॥ ३६॥

प्रमोदामोदकाद्यैश्च संवृतं युद्धलालसम् ।
तं दृष्ट्वा क्रोधसंयुक्तो मत्सरः प्राह भर्त्सयन् ॥ ३७॥

मत्सरासुर उवाच ।
किमर्थमागतस्त्वं मे वक्रतुण्ड रणेऽग्रतः ।
अद्यैव त्वां हनिष्यामि मा मुखं दर्शयस्व रे ॥ ३८॥

मूढोऽसि येन सङ्ग्रामं कर्तुमागत एव च ।
न मे मृत्युर्भवेदष्टावरणैर्देहधारिभिः ॥ ३९॥

(Page खं. १ अ. ३८ पान ८५)
शम्भुविष्णुमुखैर्देवैः प्रेरितस्त्वं न बुध्यसे ।

मोहभावेन संयातो मत्सरेण युयुत्सुना ॥ ४० ॥

हन्मि त्वामेकबाणेन ससैन्यं नात्र संशयः ।
पदाघातेन मे भूमिर्विशीर्णा जायते खल ॥ ४१ ॥

तलप्रहारसंयुक्ताः पर्वताश्चूर्णतां गताः ।
तस्याऽग्रे कथमायातः कालेन प्रेरितोऽथवा ॥ ४२ ॥

शब्दगर्जनमात्रेण कम्पते सचराचरम् ।
तस्याग्रे त्वं सुसङ्ग्रामं किं करिष्यसि तद्वद ॥ ४३ ॥

ब्रह्माण्डं सकलं युद्धे जितं येन प्रभावतः ।
तदा त्वं कुत्र गुप्तः सन् स्थितोऽसि भयभावितः ॥ ४४ ॥

समीचीनमिदं मूढाऽधुना खल कृतं त्वया ।
दृष्टेः समीपगो जातो हतो मम भविष्यसि ॥ ४५ ॥

शरणं याहि मे दुष्ट जीवितुं यदि चेच्छसि ।
मदाज्ञावशगो भूत्वा वने तिष्ठ यथासुखम् ॥ ४६ ॥

मूढभावेन संयातं त्वां न हन्मि च निर्बलम् ।
प्रेरकान् मुनिदेवांस्ते तान् हनिष्यामि निश्चितम् ॥ ४७ ॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
प्रथमे खण्डे वक्रतुण्डचरिते मत्सरासुरसमागमो नाम सप्तत्रिंशोऽध्यायः ॥ १.३७

## १.३८ वक्रतुण्डविजयो नामाष्टत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ।
मुद्गल उवाच ।
एवं ब्रुबन्तमत्यन्तं मत्सरं क्रोधसंयुतम् ।
वक्रतुण्डः प्रसन्नात्मा स्मयन्निव जगाद तम् ॥ १ ॥

वक्रतुण्ड उवाच ।
मा गर्वं कुरु दैत्येश नाहं देवो न मानुषः ।
नासुरो नैव नागश्च न गन्धर्वो न पर्वतः ॥ २ ॥

न नानायोनिजो जन्तुर्नाष्टावरणजस्तथा ।
ब्रह्मरूपोऽहमानन्दानन्दकारक एव च ॥ ३ ॥

त्वां हन्तुं मुनिदेवानां स्थापनार्थमिहागतः ।
हनिष्यामि त्वसन्देहाद् दैत्यनायक दुर्मते ॥ ४॥

शिथिलं वरपुण्यं ते साम्प्रतं पापसञ्चयात् ।
नानापापफलार्थस्य दाता तेऽहं समागतः ॥ ५॥

अकर्तुं कर्तुमीशं मामन्यथाकर्तुमादरात् ।
जानीहि मत्सर त्वं वै किं करिष्यसि तद्वद ॥ ६॥

जीवितुं चेच्छसि प्राज्ञ तदा मां शरणं व्रज ।
स्वस्थाने धर्मविद्वेषं त्यक्त्वा त्वं तु सुखी भव ॥ ७॥

देवादीनां च विद्वेषं त्यक्त्वा तिष्ठसि दैत्य चेत् ।
तदा त्वां न हनिष्यामि जानीहि त्वं मतं मम ॥ ८॥

मुद्गल उवाच ।
वक्रतुण्डवचः श्रुत्वा मत्सरो विस्मितोऽभवत् ।
उवाच तं प्रसन्नात्मा भक्तिभावेन यन्त्रितः ॥ ९॥

मत्सर उवाच ।
वक्रतुण्ड नमस्तुभ्यं वद मे सकलं प्रभो ।
संशयं छिन्धि तं पूर्वं हृदिस्थं गणनायक ॥ १०॥

यदि त्वं सगुणो नासि निर्गुणोऽपि न वर्तसे ।
ब्रह्मरूपोऽसि सर्वेश तदाकारधरः कथम् ॥ ११॥

अन्यच्च त्वं महाभाग ब्रह्मभावेन संस्थितः ।
सुरासुरसमं ब्रह्म कथमेकं समाश्रितः ॥ १२॥

असुराणां निहन्ता त्वं सुराणां पालकोऽधुना ।
एतं मे संशयं ब्रह्मन् छेत्तुमर्हसि विघ्नप ॥ १३॥

मत्सरस्य वचः श्रुत्वा वक्रतुण्डः प्रतापवान् ।
उवाच तं महावीरं भावं दृष्ट्वा हृदि स्थितम् ॥ १४॥

(Page खं. १ अ. ३८ पान ८६)
वक्रतुण्ड उवाच ।
शृणु मत्सर यत्पृष्टं त्वया बुद्धिविशारद ।
तत्सर्वं कथयिष्यामि संशयच्छेदनाय ते ॥ १५॥

अखिलं ब्रह्मरूपेण मया सृष्टं चराचरम् ।
लीलार्थं बन्धहीनेन स्वस्वधर्मयुतं परम् ॥ १६॥

पुरुषप्रकृतिभ्यां तत् पाल्यते ह्रियते मया ।
तयोर्हृदि स्थितेनैव चिन्तामणिस्वरूपिणा ॥ १७॥

सर्वेषां चित्तवृत्तेश्च चालकोऽहं न संशयः ।
मदाज्ञावशगं सर्वं वर्तते दैत्यपुङ्गव ॥ १८॥

यदा स्वधर्ममत्यन्तं त्यक्त्वा देवगणेश्वराः ।
दैत्यानां निधनार्थं च यतन्ते मूलनाशकाः ॥ १९॥

तदा दैत्यहृदिस्थोऽहं तपसि प्रेरकोस्म्यतः ।
दैत्याः कुर्वन्ति च तपो देवानां प्रजिघांसया ॥ २०॥

तपसा वरलाभेन देवान् घ्नन्ति महाबलाः ।
ततस्ते सततं देवाः सत्ताहीना भवन्ति वै ॥ २१॥

ततोऽहं देवसङ्घानां विपरीतो न संशयः ।
भवामि चासुराणां वै सिद्धिदाता महासुर ॥ २२॥

यदि दैत्या महादुष्टास्त्यक्त्वा घ्नन्ति स्वधर्मकम् ।
देवान् मूलविहीनांश्च कर्तुमिच्छन्ति दानव ॥ २३॥

तदाऽहं देवरूपेण तेषां हृदि समास्थितः ।
छिद्रं प्रकाशयाम्यादौ हनने दैत्यरक्षसाम् ॥ २४॥

ततस्तेनैव देवेन्द्रा मार्गेण सुरविद्विषः ।
घ्नन्ति मत्सर ते सर्वं कथितं मे चरित्रकम् ॥ २५॥

यदि स्वहृदये देवा निश्चयं कुर्वते परम् ।
दैत्यानां तपसां विघ्नं कर्तव्यमिति साम्प्रतम् ॥ २६॥

तदाऽहं वरदाता च भवाम्यसुरनायक ।
दैत्येभ्यो नात्र सन्देहो देवगर्वप्रहारकः ॥ २७॥

यदि दैत्या महाभागा देवैर्जाता दुरासदाः ।
तदाऽहं दैत्यनाशाय भवामि तनुधारकः ॥ २८॥

यदा दैत्याश्च देवाश्च स्वस्वधर्मपरायणाः ।
तदाऽहं ब्रह्मभावेन स्थितस्तेषां हृदि ह्यहो ॥ २९॥

त्वया प्रपीडिता देवास्त्यक्त्वा धर्मं स्वभावजम् ।
अतस्त्वां हन्तुमायातो दैत्यराज महामते ॥ ३०॥

इत्युक्त्वा निजरूपं तद्दर्शयामास विघ्नपः ।
बिन्दुमात्रे ब्रह्मणि स्वे संस्थितं सुन्दरं मुने ॥ ३१॥

वक्रतुण्डप्रसादेन तस्य दर्शनजेन च ।
फलेन दैत्यराजोऽपि दिव्यं चक्षुरवाप्तवान् ॥ ३२॥

तेनैव चक्षुषा तेन दैत्येन परमाद्भुतम् ।
दृष्टं रूपं गणेशस्य ब्रह्माकारं प्रजापते ॥ ३३॥

न न्यूनं नाधिकं तत्र न समं चात्मना न च ।
चतुष्पादमयं ब्रह्म पादहीनं स्वभावतः ॥ ३४॥

न देहो न च देह्यत्र सगुणो निर्गुणो न च ।
न मायामायिको भाति वक्रतुण्डो गजाननः ॥ ३५॥

देहं सगुणरूपं च निर्गुणं मस्तकं मुने ।
गजवक्रमयं तेन दृष्टं भिन्नं प्रभावतः ॥ ३६॥

तयोर्योगकरः साक्षाद् वक्रतुण्डः प्रतापवान् ।
संयुक्तोऽवयवाद्यैश्च ज्ञातो दैत्याधिपेन सः ॥ ३७॥

ततस्तं प्रणनामाथ भक्तियुक्तेन चेतसा ।
तुष्टाव परया भक्त्या बद्धाञ्जलिपुटोऽसुरः ॥ ३८॥

मत्सरासुर उवाच ।
नमामि वक्रतुण्डं च चतुष्पादं चतुःपरम् ।
चतुर्देहविहीनं च बिन्दुमात्रे व्यवस्थितम् ॥ ३९॥

साकारं च निराकारं मायारूपधरं प्रभुम् ।
(Page खं. १ अ. ३८ पान ८७)
नमामि मायिनं तं च मायाहीनस्वरूपकम् ॥ ४०॥

जगन्मयं च तद्धीनं सर्वकामप्रपूरकम् ।
ब्रह्मभूयप्रदं चैव नमामि गणनायकम् ॥ ४१॥

सिंहारूढं चतुर्बाहुं विघ्ननाशं नमामि च ।

सिद्धिबुद्धिपतिं चैव सिद्धिबुद्धिप्रदायकम् ॥ ४२॥

अनन्तलीलया युक्तं लीलाहीनं नमामि तम् ।
अव्यक्तं व्यक्तरूपं वै नमामि स्वहृदि स्थितम् ॥ ४३॥

वेदान्तवेद्यं सज्योतिर्ज्योतिषामपि भासकम् ।
नमामि सच्चिदानन्ददेहरूपं गजाननम् ॥ ४४॥

योगिनां हृदि संस्थं च योगिभ्यो योगदायकम् ।
भावाभावमयं देवं नमामि भववर्जितम् ॥ ४५॥

सर्वत्र पक्षहीनं तं सर्वपक्षधरं प्रभुम् ।
नमामि वक्रतुण्डाख्यं ब्रह्मब्रह्माधिपं विभुम् ॥ ४६॥

अहो भाग्यमहो भाग्यं येन दृष्टो गजाननः ।
सर्वाकारनिराकारहीनोऽयं वक्रतुण्डकः ॥ ४७॥

शरणं ते प्रपन्नोऽस्मि पाहि मां भक्तवत्सल ।
प्रवणं त्वत्पदे नित्यं संसारोत्तारणैषिणम् ॥ ४८॥

एवं स्तुत्वा वक्रतुण्डं पादयोर्निपपात ह ।
पुनः पुनः प्रणम्याऽसौ बद्धाञ्जलिपुटः स्थितः ॥ ४९॥

स दृष्ट्वा तादृशं दैत्यं भक्तियुक्तं गजाननः ।
जगाद तं महाभागं भक्तेशो भावतोषितः ॥ ५०॥

वक्रतुण्ड उवाच ।
मत्सर त्वद्विनाशाय कुपितोऽहं न संशयः ।
शरणागतनाशं च नेच्छामि वृणु वाञ्छितम् ॥ ५१॥

इदं त्वया कृतं स्तोत्रं मत्प्रीतवर्धनं महत् ।
महैश्वर्यायुरारोग्यदायकं धनधान्यदम् ॥ ५२॥

पुत्रपौत्रकलत्रादिनानासम्पत्करं परम् ।
धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति ॥ ५३॥

मुद्गल उवाच ।
वक्रतुण्डवचः श्रुत्वा मत्सरो भक्तिसंयुतः ।
जगाद वचनं तत्र वक्रतुण्डं कृताञ्जलिः ॥ ५४॥

मत्सर उवाच ।

प्रसन्नो यदि सर्वेश मह्यं देयो वरो यदि ।
सुदृढां च तदा भक्तिं त्वदीयां देहि विघ्नप ॥ ५५॥

अन्यं त्वं मे वरं देहि त्वद्भक्तास्ते च मे प्रियाः ।
स्थानं देहि तथा वृत्तिं योगक्षेमकरीं प्रभो ॥ ५६॥

मत्सरस्य वचः श्रुत्वा वक्रतुण्डस्तमब्रवीत् ।
अचला पदि मे भक्तिरद्य ते सम्भविष्यति ॥ ५७॥

स्वस्वधर्मरतान् जन्तूंस्तान् रक्षस्व च मत्सर ।
मदीयान् प्रवरान् भक्तांस्तान पालय च यत्नतः ॥ ५८॥

मदीयमूर्तिपूजा च यत्रादौ स्मरणं भवेत् ।
सर्वारम्भेषु तत्र त्वं मा विघ्नं कुरु दैत्यप ॥ ५९॥

अन्यत्र सर्वभावेषु कर्मज्ञानादिकर्तृषु ।
आसुरेणैव वर्तस्व फलं ग्राह्यं त्वयाऽसुर ॥ ६०॥

तेषां हृदि समाविश्य कुरु राज्यं महामते ।
मद्भक्त्यादिषु भावेषु दासवत्त्वं सदा भव ॥ ६१॥

एवमुक्तो महादैत्यस्तथेति तमुवाच ह ।
प्रणिपत्य गणेशानं हर्षयुक्तेन चेतसा ॥ ६२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते वक्रतुण्डविजयो नामाष्टत्रिंशोऽध्यायः ॥ १.३८

(Page खं. १ अ. ३९ पान ८८)

## १.३९ वक्रतुण्डान्तर्धानं नामैकोनचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
मत्सरं शान्तिमापन्नं दृष्ट्वा देवर्षयस्तदा ।
प्रहृष्टमनसो जातास्तुष्टुवुस्तं गजाननम् ॥ १॥

देवर्षय ऊचुः ।
सदा ब्रह्मभूतं विकारादिहीनं विकारादिभूतं महेशादिवन्द्यम् ।
अपारस्वरूपं स्वसंवेद्यमेकं नमामः सदा वक्रतुण्डं भजामः ॥ २॥

अजं निर्विकल्पं कलाकालहीनं हृदिस्थं सदा साक्षिरूपं परेशम् ।
जनज्ञानकारं प्रकाशैर्विहीनं नमामः सदा वक्रतुण्डं भजामः ॥ ३॥

अनन्तस्वरूपं सदानन्दकन्दं प्रकाशस्वरूपं सदा सर्वगं तम् ।
अनादिं गुणादिं गुणाधारभूतं नमामः सदा वक्रतुण्डं भजामः ॥ ४॥

धरावायुतेजोमयं तोयभावं सदाकाशरूपं महाभूतसंस्थम् ।
अहङ्कारधारं तमोमात्रसंस्थं नमामः सदा वक्रतुण्डं भजामः ॥ ५॥

रविप्राणविष्णुप्रचेतोयमेशविधात्रश्विवैश्वानरेन्द्रप्रकाशम् ।
दिशां बोधकं सर्वदेवाधिरूपं नमामः सदा वक्रतुण्डं भजामः ॥ ६॥

उपस्थत्वगुक्तीक्षणस्थप्रकाशं कराङ्घ्रिस्वरूपं कृतघ्राणजिह्वम् ।
गुदस्थं श्रुतिस्थं महाखप्रकाशं नमामः सदा वक्रतुण्डं भजामः ॥ ७॥

रजोरूपसृष्टिप्रकाशे विधिं तं सदा पालने केशवं सत्त्वसंस्थम् ।
तमोरूपधारं हरं संहरं तं नमामः सदा वक्रतुण्डं भजामः ॥ ८॥

दिशाधीशरूपं सदाशास्वरूपं ग्रहादिप्रकाशं ध्रुवादिं खगस्थम् ।
अनन्तोडुरूपं तदाकारहीनं नमामः सदा वक्रतुण्डं भजामः ॥ ९॥

महत्तत्वरूपं प्रधानस्वरूपमहङ्कारधारं त्रयीबोधकारम् ।
अनाद्यन्तमायं तदाधारपुच्छं नमामः सदा वक्रतुण्डं भजामः ॥ १०॥

सदा कर्मधारं फलैः स्वर्गदं तमकर्मप्रकाशेन मुक्तिप्रदं तम् ।
विकर्मादिना यातनाधारभूतं नमामः सदा वक्रतुण्डं भजामः ॥ ११॥

अलोभस्वरूपं सदा लोभधारं जनज्ञानकारं जनाधीशपालम् ।
नृणां सिद्धिदं मानवं मानवस्थं नमामः सदा वक्रतुण्डं भजामः ॥ १२॥

लतावृक्षरूपं सदा पक्षिरूपं धनादिप्रकाशं सदा धान्यरूपम् ।
प्रसूपुत्रपौत्रादिनानास्वरूपं नमामः सदा वक्रतुण्डं भजामः ॥ १३॥

खगेशस्वरूपं वृषादिप्रसंस्थं मृगेन्द्रादिबोधं मृगेन्द्रस्वरूपम् ।
धराधारहेमाद्रिमेरुस्वरूपं नमामः सदा वक्रतुण्डं भजामः ॥ १४॥

सुवर्णादिधातुस्थसद्रङ्गसंस्थं समुद्रादिमेघस्वरूपं जलस्थम् ।
जले जन्तुमत्स्यादिनानाविभेदं नमामः सदा वक्रतुण्डं भजामः ॥ १५॥

सदा शेषनागादिनागस्वरूपं सदा नागभूषं च लीलाकरं तैः ।
सुरारिस्वरूपं च दैत्यादिभूतं नमामः सदा वक्रतुण्डं भजामः ॥ १६॥

वरं पाशधारं सदा भक्तपोषं महापौरुषं मायिनं सिंहसंस्थम् ।
चतुर्बाहुधारं सदा विघ्ननाशं नमामः सदा वक्रतुण्डं भजामः ॥ १७॥

गणेशं गणेशादिवन्द्यं सुरेशं परं सर्वपूज्यं सुबोधादिगम्यम् ।
महावाक्यवेदान्तवेद्यं परेशं नमामः सदा वक्रतुण्डं भजामः ॥ १८॥

अनन्तावतारैः सदा पालयन्तं स्वधर्मादिसंस्थं जनं कारयन्तम् ।
सुरैर्दैत्यपैर्वन्द्यमेकं समं त्वां नमामः सदा वक्रतुण्डं भजामः ॥ १९॥

(Page खं. १ अ. ३९ पान ८९)
त्वया नाशितोऽयं महादैत्यभूपः सुशान्तेर्धरोऽयं कृतस्तेन विश्वम् ।
अखण्डप्रहर्षेण युक्तं च तं वै नमामः सदा वक्रतुण्डं भजामः ॥ २०॥

न विन्दन्ति यं वेदवेदज्ञमर्त्या न विन्दन्ति यं शास्त्रशास्त्रज्ञभूपाः ।
न विन्दन्ति यं योगयोगीशकाद्या नमामः सदा वक्रतुण्डं भजामः ॥ २१॥

न वेदा विदुर्यं च देवेन्द्रमुख्या न योगैर्मुनीन्द्रा वयं किं स्तुमश्च ।
तथाऽपि स्वबुध्या स्तुतं वक्रतुण्डं नमामः सदा वक्रतुण्डं भजामः ॥ २२॥

मुद्गल उवाच ।
एवं स्तुत्वा वक्रतुण्डं स्थिता देवषर्यः प्रभो ।
बद्धाञ्जलिपुटाः सर्वे तूष्णीम्भावेन मानद ॥ २३॥

देवानां च मुनीनां स स्तुतिं श्रुत्वा गजाननः ।
उवाच तान् प्रसन्नात्मा हर्षयन् वचनं महत् ॥ २४॥

वक्रतुण्ड उवाच ।
शृणुध्वं मुनयः सर्वे देवा मे वचनं महत् ।
भवत्कृतमिदं स्तोत्रं मत्प्रीतेर्वर्धनं भवेत् ॥ २५॥

अनन स्तौति यो नित्यं मां तस्य परिपूरये ।
भोगान्नानाविधांश्चैव पुत्रपौत्रादिसम्पदः ॥ २६॥

यं यमिच्छति तं तं च दास्येऽहं नात्र संशयः ।
भुक्तिमुक्तिप्रदं चैतद्ब्रह्मभूयकरं भवेत् ॥ २७॥

नानासिद्धिप्रदं चैव हृदि बुद्धिप्रकाशकम् ।
सुरेन्द्रैर्वन्द्यतां याति यो मां स्तौति त्वनेन सः ॥ २८॥

सहस्रावर्तनान् मर्त्यः कारागृहगतं नरम् ।
मोचयेन्नात्र सन्देहो मत्प्रियः सर्वदा भवेत् ॥ २९॥

अपराधशतैर्युक्तो यो वै भवति मानवः ।
तस्यापराधसहनं करोमि स्तोत्रपाठतः ॥ ३०॥

एकविंशतिवारं य एकविंशद्दिनानि वै ।
पठिष्यति सदा तस्मै चिन्तितं प्रददाम्यहम् ॥ ३१॥

एकविंशतिकाः श्लोका भवद्भिर्मत्प्रियात्मकैः ।
कृतास्तैर्मां स देवास्तु स्तुता वै मुनयोऽखिलाः ॥ ३२॥

तेन विघ्नविहीनाश्च स्वधर्मरुचयस्तथा ।
भविष्यथ महाभागा भुक्तिमुक्तिप्रदास्तथा ॥ ३३॥

वरं ब्रूत महाभागा येषां यन्मनसि स्थितम् ।
तद्दास्यामि न सन्देहः स्तोत्रसन्तोषितो ह्यहम् ॥ ३४॥

मुद्गल उवाच ।
एवमुक्ताः सुराः सर्वे मुनयस्तं प्रणम्य च ।
प्रहृष्टमानसा ऊचुर्वक्रतुण्डं महाबलम् ॥ ३५॥

देवर्षय ऊचुः ।
यदि प्रसन्नतां यातो वक्रतुण्ड ददासि चेत् ।
त्वदीयामचलां भक्तिं देहि नाथ दयानिधे ॥ ३६॥

यदि प्राप्ता त्वदीया च भक्तिर्जन्तोस्तदा प्रभो ।
किं दुर्लभं भवेत्तस्य हस्तगाः सर्वसिद्धयः ॥ ३७॥

अतो भक्तिं महाभाग देहि नो विघ्ननायक ।
तया तृप्ता भविष्यामस्त्वत्पादप्रवणा वयम् ॥ ३८॥

तेषां वचनमाकर्ण्य देवदेवो गजाननः ।
जगाद भावगम्भीरं ज्ञाता विज्ञजनप्रियः ॥ ३९॥

वक्रतुण्ड उवाच ।
मदीया भक्तिरचला भविष्यति न संशयः ।
भवतां भावयुक्तानां भो भो देवर्षयः खलु ॥ ४०॥

अन्तर्दधे स उक्त्वैवं वक्रतुण्डो गणेश्वरः ।

पश्यतां मुनिदेवानां स्वानन्दस्थो बभूव ह ॥ ४१॥

ततो देवर्षयः सर्वे खिन्नाः स्वस्वपदं ययुः ।
(Page खं. १ अ. ४० पान ९०)
ध्यायन्तश्च तमेवैते वक्रतुण्डं सुसिद्धिदम् ॥ ४२॥

मत्सरोऽपि ततः सर्वैर्दैत्यैः परिवृतो ययौ ।
स्वं पदं पालयन् शीघ्रं सुशान्तो ह्यभवत् सदा ॥ ४३॥

तं त्यक्त्वा दैत्यसङ्घास्ते ययुः स्वं स्वं गृहं मुने ।
एवं मत्सरमाहात्म्यं वक्रतुण्डेन कारितम् ॥ ४४॥

स एव वक्रतुण्डस्तु सृजत्यवति च प्रभुः ।
हरते भावहीनः सन् नाद्यमध्यान्तगः स्वयम् ॥ ४५॥

एवं नानावतारेण स्वस्वधर्मरतान् सुरान् ।
असुरान् मानवादींश्च कुरुते वक्रतुण्डकः ॥ ४६॥

अवतारा अनन्ताश्च वक्रतुण्डस्य भो विभो ।
चरित्रमखिलं तेषां कथितुं शक्यते न वै ॥ ४७॥

ब्रह्मणा षण्मुखेनाऽपि विष्णुना शङ्करेण च ।
शेषेण मुनिभिश्चैव वेदैः काहं च तत्र वै ॥ ४८॥

दिवोदासशमार्थाय स एवं वक्रतुण्डकः ।
शिवपुत्रत्वमापन्नो ढुण्ढिराजेति नामतः ॥ ४९॥

वामनस्य वरं दातुं स एव गणनायकः ।
प्रकटोऽभून् महातेजास्तस्याग्रे भक्तपालकः ॥ ५०॥

एवं नानावतारैश्च भक्तरक्षणलालसः ।
करोति भक्तसंरक्षां जानीहि त्वं प्रजापते ॥ ५१॥

ब्रह्मणा सृष्टिकार्यार्थं व्याकुलेन स न स्मृतः ।
वक्रतुण्डस्ततो दैत्यो मत्सरः प्रविवेश तम् ॥ ५२॥

तेनासुरस्वभावेन पीडितो विधिरद्भुतम् ।
विघ्नयुक्तोऽभवत्तत्र सृष्टिं कर्तुं न स क्षमः ॥ ५३॥

पुरातनं वचः स्मृत्वा पुनस्तं शरणं ययौ ।
विधिर्विघ्नविहीनः स ससर्ज सकलं जगत् ॥ ५४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
प्रथमे खण्डे वक्रतुण्डचरिते वक्रतुण्डान्तर्धानं नामैकोनचत्वारिंशोऽध्यायः ॥ १.३९

## १.४० ब्रह्मणस्तपश्चरणं नाम चत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वया श्रावितं महत् ।
चरित्रं वक्रतुण्डस्य ब्रह्मभूयकरं महत् ॥ १॥

श्रुत्वा श्रुत्वा न मे तृप्तिर्जायतेऽमृततो यथा ।
इच्छामि तत्पुनः श्रोतुं पूजितो विधिना कथम् ॥ २॥

विस्तरेण च मे ब्रूहि कथां पापापनोदिनीम् ।
श्रोतुः प्रष्टुश्च वक्तुश्च त्रयाणां सर्वसिद्धिदाम् ॥ ३॥

सूत उवाच ।
दक्षस्य वचनं श्रुत्वा मुद्गलस्तमुवाच ह ।
उत्फुल्लनयनो हर्षाद्गाणेशेन्द्रः स शौनक ॥ ४॥

मुद्गल उवाच ।
शृणु दक्ष महाभाग धन्योऽसि न च संशयः ।
येन ते गणराजस्य कथायां प्रीतिरद्भुता ॥ ५॥

अल्पपुण्यवतो ढुण्ढिकथाया अवधारणे ।
श्रवणे च तथा प्रीतिर्जायते न कदाचन ॥ ६॥

अतस्तेहं प्रवक्ष्यामि त्वदादरसुतोषितः ।
सङ्क्षेपेण कथां दिव्यां गणेशस्य महात्मनः ॥ ७॥

प्रलयादौ गणेशेन सृष्टाः पञ्च सुराधिपाः ।
तेषां तपःप्रभावेण प्रसन्नो वरदोऽभवत् ॥ ८॥

वरस्यैव प्रभावेण समर्थास्ते बभूविरे ।
(Page खं. १ अ. ४० पान ९१)
स्वस्वकार्ये प्रवृत्ताश्च सावधानेन चेतसा ॥ ९॥

सृष्टिप्रकरणे ब्रह्मा प्रवृत्तो जगतोऽभवत् ।
न सस्मार गणेशानं विस्मृत्यादौ तदर्चनम् ॥ १०॥

तेन भ्रान्तोऽभवत् सद्यो मानसे गर्वमादधे ।
त्रिलोके नैव मत्तुल्यः स्रष्टाऽहं नात्र संशयः ॥ ११॥

सृजामि सकलं विश्वं तदा विष्णुश्च पाति वै ।
रुद्रः संहरते तच्च शक्तिर्मोहं करोति च ॥ १२॥

सूर्यः कर्मप्रकाशं च करोति जगति प्रभुः ।
न सृष्टं चेन् मया विश्वं देवत्वं तु निरर्थकम् ॥ १३॥

ममाज्ञादौ गणेशेन कृता सृष्टौ विशेषतः ।
मदीयां पात्रतां दृष्ट्वा तस्मान्नान्योऽस्ति मत्समः ॥ १४॥

इति गर्वेण मनसि मोहितोऽभूत् पितामहः ।
ततो विघ्नगणास्तत्र प्रबभूवुरनेकशः ॥ १५॥

सृष्टिं विरचयन्तं तं ब्रह्माणं प्राप्य दारुणः ।
नानारूपा महावीर्यास्ताडयामासुरोजसा ॥ १६॥

त्रिनेत्राः पञ्चनेत्राश्च पृष्ठनेत्रा महाबलाः ।
दशतुण्डा सहस्रं च मुखानि दधतः परे ॥ १७॥

एवं नानास्वरूपास्ते विधिं धृत्वा प्रेरेमिरे ।
बालक्रीडनकं कृत्वा दुःखयुक्तं महाबलाः ॥ १८॥

एवं स परवान् ब्रह्मा गर्वं सर्वं प्रमुच्य वै ।
जगाम शरणं देवं गणेशं विघ्ननायकम् ॥ १९॥

गतगर्वो हृदि स्मृत्वा तुष्टाव गणनायकम् ।
तेन विघ्नगणाः सर्वेंऽतर्धानं तत्र चक्रिरे ॥ २०॥

मुक्तो विघ्नैस्तदा ब्रह्मा तताप परमं तपः ।
षडक्षरेण मन्त्रेण वक्रतुण्डमतोषयत् ॥ २१॥

वायुभक्षोऽभवद्ब्रह्मा पादाङ्गुष्ठाग्रसंस्थितः ।
चकार तेजसा वृत्तिं गणेशे निश्चलां ततः ॥ २२॥

एवं दिव्यसहस्रं स तपस्तेपे सुदारुणम् ।
ततो भूतानि सर्वाणि व्याकुलाणि तदाऽभवन् ॥ २३॥

ततस्तस्योग्रतपसा प्रसन्नो वक्रतुण्डकः ।
आययौ भक्तराजं तं भक्तिभावेन तोषितः ॥ २४॥

तेजोरूपी महाकायो वक्रतुण्डश्चतुर्भुजः ।
सिंहारूढस्त्रिनेत्रश्च पाशाङ्कुशधरो विभुः ॥ २५॥

वरदाभयहस्तश्च पृथुवक्षा महोदरः ।
सिद्धिबुद्धियुतश्चिन्तामणिना च विराजितः ॥ २६॥

नानालङ्कारसंयुक्तः शेषनाभिर्गजाननः ।
सिन्दूरारुणदेहश्च नानावस्त्रधरः प्रभुः ॥ २७॥

तं दृष्ट्वा भयभीतोऽसौ विधाता स्तौति तं परम् ।
गणेशं हृदि सञ्चिन्त्य नानास्तोत्रैर्विधानतः ॥ २८॥

वक्रतुण्डः स्तुवन्तं तमुवाच घननिस्वनः ।
वरं वृणु विधातस्त्वं दास्यामि तु न संशयः ॥ २९॥

इति तस्य वचः श्रुत्वा ब्रह्मा तं प्रणनाम च ।
उवाच सौम्यरूपेण वरं देहि गजानन ॥ ३०॥

ब्रह्मणो गिरमाकर्ण्य सौम्यतेजा गजाननः ।
उवाच तं महाभागं भक्तिभावेन तोषितः ॥ ३१॥

वक्रतुण्ड उवाच ।
स्वानन्दनगरे संस्थं सदैतादृशरूपकम् ।
मृत्युलोके स्थितस्त्वं च कथं द्रक्ष्यसि मानद ॥ ३२॥

तपसा भक्तिभावेन तोषितोऽहं त्वया विधे ।
तेन सौम्यस्वरूपेण त्वदग्रे संस्थितोऽभवम् ॥ ३३॥

त्वं तु मत्तो वरान् ब्रूहि दास्येऽहं वाञ्छितान् परान् ।
(Page खं. १ अ. ४१ पान ९२)
मयि प्रसन्नतां याते दुर्लभं न भविष्यति ॥ ३४॥

गणेशवचनं श्रुत्वा ब्रह्मा तं प्रणनाम च ।
बद्धाञ्जलिपुटो भूत्वा स्तोतुं तमुपचक्रमे ॥ ३५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे

प्रथमे खण्डे वक्रतुण्डचरिते ब्रह्मणस्तपश्चरणं नाम चत्वारिंशोऽध्यायः ॥ १.४०

## १.४१ दम्भासुरराज्याभिषेको नाम एकचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

ब्रह्मोवाच ।
नमस्ते वक्रतुण्डाय गणेशाय महात्मने ।
अनन्तानन्तपाराय विघ्नेशाय नमो नमः ॥ १॥

नमो भक्तिप्रियायैव भक्तसंरक्षकाय ते ।
अभक्तकामनाशाय सर्वदात्रे नमो नमः ॥ २॥

निर्गुणाय निरूपाय निर्मलाय गुणात्मने ।
अनन्ताननधाराय सिंहवाहाय ते नमः ॥ ३॥

अनादिरूपकायैव नमः सर्वप्रियङ्कर ।
वेदान्तवेद्यदेहाय गजवक्त्राय ते नमः ॥ ४॥

अनन्तोदरसंस्थाय नानाभोगकराय ते ।
मायाधाराय मायाया मोहकाय नमो नमः ॥ ५॥

अमेयशक्तये तुभ्यमनाधाराय दंष्ट्रिणे ।
चतुर्बाहुयुतायैव स्वानन्दपतये नमः ॥ ६॥

सिद्धिबुद्धिप्रदायैव सिद्धिबुद्धिधराय च ।
ब्रह्मभूताय देवाय विघ्नहर्त्रे नमोऽस्तु ते ॥ ७॥

वक्रतुण्ड प्रसन्नस्त्वं मह्यं देहि तदानघ ।
त्वदीयामचलां भक्तिं यया बन्धो न विद्यते ॥ ८॥

त्वदाज्ञया प्रवृत्तोऽहं तत्र सामर्थ्यमद्भुतम् ।
सृष्टौ देहि गणाधीश विघ्नहीनं च मे सदा ॥ ९॥

अहं स्रष्टा च सर्वेषां त्वया प्रोक्तो गजानन ।
अतस्त्वं पुत्रभावेन गृहे मे तिष्ठ मायया ॥ १०॥

त्वं साक्षाद्ब्रह्मभूतश्चेद्यदि पुत्रो भविष्यसि ।
तदाहं बन्धनान्मुक्तो भविष्यामि च राजसात् ॥ ११॥

तव माता पिता स्वामिन् बन्धयुक्तौ कृतौ यदि ।

तदा वेदादिकं सर्वं मिथ्याभूतं भविष्यति ॥ १२॥

नामग्रहणमात्रेण ब्रह्मभूयप्रदो भवान् ।
किं पुनः पुत्रभावेन त्वं चेत् स्थास्यसि मे गृहे ॥ १३॥

अन्यच्च लालनं कुर्यां सेवनं पूजनं तथा ।
निरन्तरं प्रपश्येयं भवेयमतुलस्ततः ॥ १४॥

ब्रह्मणो वचनं तस्य श्रुत्वा गणपतिः स्वयम् ।
जगाद तं महाभागं हर्षयन् सर्वभाववित् ॥ १५॥

वक्रतुण्ड उवाच ।
त्वया यत् प्रार्थितं ब्रह्मन् तदस्तु सकलं किल ।
सृष्टिकतृर्त्वसामर्थ्यमद्भुतं ते भविष्यति ॥ १६॥

निर्विघ्नं सर्वकार्येषु मत्स्मृत्या प्रभविष्यति ।
यं यमिच्छसि तं तं त्वं कामं प्राप्स्यसि सर्वदा ॥ १७॥

तव पुत्रो भविष्यामि तारको माययांशतः ।
वाञ्छितं पूरयिष्यामि भक्तिभावेन तोषितः ॥ १८॥

त्वया कृतमिदं स्तोत्रं सर्वदं प्रभविष्यति ।
मम प्रीतिकरं ब्रह्मन् ब्रह्मभूयप्रदं तथा ॥ १९॥

(Page खं. १ अ. ४१ पान ९३)
इत्युक्त्वान्तर्दधे दक्ष वक्रतुण्डः प्रतापवान् ।
ब्रह्माऽपि विमना भूत्वा तत्र वै संस्थितोऽभवत् ॥ २०॥

वक्रतुण्डप्रसादेन निर्ममे सकलं जगत् ।
चराचरमयं सर्वं यथायोग्यं चकार ह ॥ २१॥

सृष्ट्वा त्रिभुवनं सर्वं कृतकृत्य इवाऽभवत् ।
स्थितः स्वसुखनिष्ठः सन् वक्रतुण्डं स संस्मरन् ॥ २२॥

एकदा वायुवेगेन कम्पितः स प्रजापतिः ।
तस्मात् पुरुषरूपेण दम्भश्च प्रकटोऽभवत् ॥ २३॥

तत्पुरः पुरुषश्रेष्ठश्चतुर्बाहुधरः खलः ।
गदाचक्रत्रिशूलास्त्रधनुर्बाणधरो बभौ ॥ २४॥

रूपेण तेजसा पूर्णो वीर्येण ह्यतुलः परः ।

महाकायो महाबाहुः स्थितः पर्वतसन्निभः ॥ २५॥

तं दृष्ट्वा विस्मितो ब्रह्मा पप्रच्छ च नरं ततः ।
कस्य त्वं कुत आयातः किं कार्यं तेऽत्र वर्तते ॥ २६॥

वद मे पृच्छते सर्वं महाबलपराक्रम ।
धन्योऽसि रूपलावण्ययुक्तः परमशोभनः ॥ २७॥

ब्रह्मणो वच आकर्ण्य मेघगम्भीरया गिरा ।
उवाच तं विधातारं स्मयमान इदं वचः ॥ २८॥

पुरुष उवाच ।
विधेऽहं त्वां प्रजानामि प्रभावान् मे च मानद ।
तवाङ्गकम्पसम्भूतं मां जानीहि प्रजापते ॥ २९॥

देहि मे नाम योग्यं त्वं पुत्रोऽहं ते च सुव्रत ।
स्थानं देहि तथा वृत्तिं योगक्षेमकरीं पराम् ॥ ३०॥

वचस्तस्य समाकर्ण्य तमूचे पद्मसम्भवः ।
हास्यं कृत्वा महाबाहुः प्रीणयन् वाक्यमादरात् ॥ ३१॥

ब्रह्मोवाच ।
किं मां जानासि पुत्र त्वं दम्भेन प्रब्रवीषि रे ।
अतस्त्वं दम्भनामा वै भविष्यसि महाखलः ॥ ३२॥

यत्र तत्र गतिस्ते वै भविष्यति महासुर ।
भोगान्नानाविधान् भुङ्क्ष्व यथारुचि यथासुखम् ॥ ३३॥

एवमुक्तो महाबाहुस्तं जगाम प्रणम्य सः ।
प्रदक्षिणीकृत्य विधिं क्षितिमण्डलमादरात् ॥ ३४॥

तत्रागत्य विचारं स कृतवान् मानसे खलः ।
ब्रह्मणाऽसत्कृतोऽहं वै तस्य गर्वं हराम्यहम् ॥ ३५॥

विचार्य सहसा दम्भो जगाम शरणं कविम् ।
तेनोपदिष्टमन्त्रेण ब्रह्माणं समतोषयत् ॥ ३६॥

एकपादेन तिष्ठन् सन्निराहारपरायणः ।
तताप तप उग्रं वै वर्षाणामयुतं गतम् ॥ ३७॥

तस्यैव तपसा सर्वं व्याकुलं सचराचरम् ।

न स्थातुमशकत् स्थाने भयभीतं बभूव ह ॥ ३८॥

तत् दृष्ट्वा परमाश्चर्यं ब्रह्मा देवगणैः सह ।
आययौ तं वरं दातुं तपसा तोषितः प्रभुः ॥ ३९॥

काष्ठवत्तं स्थितं वीक्ष्य विस्मितः कमलासनः ।
जगाद तं महाभागं हर्षयन्निव भाषया ॥ ४०॥

ब्रह्मोवाच ।
वरं वृणु महाभाग यं यं मनसि संस्थितम् ।
ईप्सितं पूरयिष्यामि नात्र कार्या विचारणा ॥ ४१॥

ब्रह्मणो वचनं श्रुत्वा दम्भः परमहर्षितः ।
तं प्रणम्य प्रतुष्टाव बद्धाञ्जलिपुटो बली ॥ ४२॥

दम्भ उवाच ।
नमस्ते सृष्टिकर्त्रे वै सृष्टिपात्रे प्रजापते ।
सृष्टिहर्त्रे त्रिरूपाय ब्रह्मविष्णुशिवात्मने ॥ ४३॥

त्वया ततमिदं सर्वं त्वदाधारं महाप्रभो ।
(Page खं. १ अ. ४२ पान ९४)
त्वयि सुप्ते जगन्नष्टं भविष्यति न संशयः ॥ ४४॥

चराचमयो भूत्वा क्रीडसि त्वं पितामह ।
एकानेकप्रभेदेन त्वं स्थितोऽसि जगत्प्रभो ॥ ४५॥

अणुभ्योऽणुतरस्त्वं च महद्भ्यश्च महान् किल ।
कस्त्वां स्तोतुं समर्थः स्याद् ब्रह्माकारेण संस्थितम् ॥ ४६॥

महद्भाग्यं विभो मेऽद्य येन ते दर्शनं परम् ।
प्राप्तं सकलपापघ्नमग्रे शुभकरं तथा ॥ ४७॥

यदि प्रसन्नतां यातो यदि देयो वरो महान् ।
तदा मे वाञ्छितं सर्वं पूरयस्व प्रजापते ॥ ४८॥

राज्यं त्रैलोक्यस्य तथा मह्यं देहि पितामह ।
पञ्चभूतात्मकेभ्यश्च मृत्युर्न च कदा भवेत् ॥ ४९॥

सङ्ग्रामे मत्समः कश्चिन्नान्यः स्यान् मां कुरु प्रभो ।
अखण्डैश्वर्यसंयुक्तमारोग्यादिसमन्वितम् ॥ ५०॥

इति तस्य वचः श्रुत्वा ब्रह्मा तं प्रत्युवाच ह ।
तपसा तोषितस्तस्मै दातुमुत्सुकतां गतः ॥ ५१॥

ब्रह्मोवाच ।
त्वया यत्प्रार्थितं दम्भ तत्सर्वं प्रभविष्यति ।
अन्यद्यच्चिन्तितं तत्ते सिद्धरूपं भविष्यति ॥ ५२॥

इत्युक्त्वान्तर्दधे ब्रह्मा दम्भः संहर्षितोऽभवत् ।
स्वगृहं प्रजगामासौ महाबलपराक्रमः ॥ ५३॥

नगरं शोभनं नाम कारयामास दर्पितः ।
पृथिव्यां सर्वशोभाढ्यं वासं तत्र चकार ह ॥ ५४॥

ततो दैत्यगणाः सर्वे शुक्रेन प्रेरिता मुने ।
आययुस्तत्र दम्भस्य नगरे हर्षिता भृशम् ॥ ५५॥

शुक्रः समागतस्तत्र मुनिभिर्ब्रह्मवादिभिः ।
दैत्यराज्यं स दम्भायाऽभवद्दातुं स उद्यतः ॥ ५६॥

शुभे लग्ने मुहूर्ते च सोऽभिषेकमकारयत् ।
ब्राह्मणैर्दैत्यराजानां राजा दम्भो बभूव ह ॥ ५७॥

महोत्सवं हर्षितास्ते चक्रुः सर्वे समागताः ।
हृष्टपुष्टजनाकीर्णं नगरं शुशुभे भृशम् ॥ ५८॥

सर्वे स्वस्वगृहे जग्मुस्ततो हर्षसमन्विताः ।
मुख्याश्च संस्थितास्तत्र दैत्याः परमदारुणाः ॥ ५९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते दम्भासुरराज्याभिषेको नाम एकचत्वारिंशोऽध्यायः ॥ १.४१

## १.४२ दम्भासुरविजयो नाम द्विचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
नगरे दम्भदैत्यस्य महोत्सवयुता बभुः ।
जनाः सर्वे महाभागाः कञ्चित्कालं प्रजापते ॥ १॥

एकदा दैत्यपाः सर्वे ययुस्तत्र महाबलम् ।
सुहुण्डश्च तथा हुण्डो रुक्मकेतुर्महाबलः ॥ २॥

मद्यपश्च सकोपश्च तथा क्रोधासुरो महान् ।
कामासुरो बलाढयश्च रासभासुर एव च ॥ ३॥

इत्याद्या बहवश्चान्ये दम्भं शोभासमन्वितम् ।
प्रणम्योचुर्महात्मान उत्सुका देवनाशने ॥ ४॥

दैत्येशा ऊचुः ।
किं स्थितोऽसि महाराज वयं दासाः समागताः ।
त्रिभुवनं प्रजेष्यामो देवमर्दनलालसाः ॥ ५॥

(Page खं. १ अ. ४२ पान ९५)
तवाज्ञावशगाः सर्वे दैत्यदानवराक्षसाः ।
ब्रह्माण्डे न भवेत्तुल्यस्तव दम्भ बलेन वा ॥ ६॥

यशसा तेजसा चैव न समस्ते सुराधिप ।
आज्ञापय महाबाहो जेष्यामः सकलं जगत् ॥ ७॥

दैत्येशानां वचः श्रुत्वा दम्भदैत्यः प्रहर्षितः ।
उवाच तान् महाभागान् भावयुक्तेन चेतसा ॥ ८॥

दम्भासुर उवाच ।
सम्यगुक्तं महाभागा ममापि हृदये स्थितम् ।
भवद्भिः सहितोऽहं वै जेष्यामि सचराचरम् ॥ ९॥

एवमुक्त्वा स दैत्येशः शुक्रं तत्रानयन्मुने ।
मतं तस्य समादाय निर्जगाम ततः पुरात् ॥ १०॥

अपारसेनया सार्धं चतुरङ्गसुयुक्तया ।
सर्वे पृथिव्यां राजानो जिता दैत्यैर्महाबलैः ॥ ११॥

पातालेषु च सर्वान् वै नागान् जित्वा दिवं ययुः ।
तत्रेन्द्रो देवदेवेन्द्रैर्युयुधे सोऽसुरैः सह ॥ १२॥

तेन दैत्यगणाः सर्वे भयभीताः समन्ततः ।
वज्रपातैर्महाघोरैश्चूर्णिता ज्वालितास्तथा ॥ १३॥

असुरा रणभूमिं च त्यक्त्वा सर्वे पलायिताः ।

ततो दम्भासुरस्तत्र युयुधे बलगर्वितः ॥ १४॥

चक्रपातेन देवेन्द्रं मूर्च्छितं च चकार ह ।
देवान् बाणार्दितान् सर्वान् कारयामास दैत्यपः ॥ १५॥

लब्ध्वा संज्ञां सुरेन्द्रो वै पलायत जिजीविषुः ।
ततो देवगणास्तं चान्वगुः सर्वे भयातुराः ॥ १६॥

दैत्य ऐरावतारूढो देवेन्द्रस्यासने स्थितः ।
अमराणां पुरीं गत्वा हर्षितो हर्षयन् स्वकान् ॥ १७॥

इन्द्रो देवगणैः सर्वैर्ब्रह्माणं शरणं ययौ ।
ब्रह्मणा सह विष्णुं च तेन सार्द्धं शिवं ययौ ॥ १८॥

शिवः क्रोधसमायुक्त आययौ रणमूर्धनि ।
जुहाव दैत्यराजं तं सङ्ग्रामाय महाबलम् ॥ १९॥

ततो दैत्येशसंयुक्तो दम्भदैत्यः समाययौ ।
क्रोधसंरक्तचक्षुस्तं सन्नद्धो बलसंयुतः ॥ २०॥

ततः समभवद्युद्धं दारुणं रोमहर्षणम् ।
दैत्यानां चैव देवानां परस्परविनाशनम् ॥ २१॥

चत्वारिंशद्दिनान्यत्र तुमुलं नीतिसंयुतम् ।
शोणितौघा महानद्यो जाताः प्रेतसमाकुलाः ॥ २२॥

ततो दम्भः स्वयं क्रुद्धो बाणैर्देवानमर्दयत् ।
चकार देवराजांस्तान् मूर्च्छितान् धरणिं गतान् ॥ २३॥

ततः शम्भुस्त्रिशूलेन तं जघान महाबलम् ।
पपात मूर्च्छया दैत्यः क्षणादुत्थितवान् पुनः ॥ २४॥

तत्याज बलवांश्चक्रं पातयामास शङ्करम् ।
मूर्च्छितं प्रहरार्द्धं च दम्भदैत्यः प्रतापवान् ॥ २५॥

दृष्ट्वाऽद्भुतं महावीर्यं दैत्यराजस्य शङ्करः ।
पलायत ससंज्ञः सन् वने वै देवसंयुतः ॥ २६॥

देवेन्द्रान् गच्छतो दृष्ट्वा जहसुर्दैत्यनायकाः ।
आनन्देन समायुक्ता विविशुस्त्वमरावतीम् ॥ २७॥

ततः स सत्यलोके च वैकुण्ठे दैत्यनायकान् ।
कैलासे चामरावत्यां स्थापयामास यत्नतः ॥ २८॥

नानादेवपुरे रम्ये स्थापयामास दानवान् ।
आययौ शोभनायां स स्वपुर्यां बलसंयुतः ॥ २९॥

चकार राज्यमुन्मत्तस्त्रैलोकस्य महाबलः ।
ततः कर्मविनाशार्थमाज्ञापयत दैत्यपान् ॥ ३०॥

(Page खं. १ अ. ४३ पान ९६)
तदाज्ञया ययुः सर्वे दैत्याः परमदारुणाः ।
ब्राह्मणादीन् बबन्धुस्ते ताडयामासुरोजसा ॥ ३१॥

यज्ञवाटान् बभञ्जुस्ते यज्ञवृक्षादिकान् खलाः ।
तीर्थानि लोपयामासुर्देवतायतनानि च ॥ ३२॥

एवं नानाविधैर्यत्नैः कर्मलोपं प्रचक्रिरे ।
केचिद्भ्रष्टा द्विजास्तत्र मृताः केचित्तदाऽभवन् ॥ ३३॥

केचिद्वनं ययुस्तत्र सिंहव्याघ्रादिसङ्कुलम् ।
सन्ध्यादिभिर्विहीनास्ते द्विजास्तत्राऽभवन् किल ॥ ३४॥

न स्वाहा न स्वधा तत्र न वषट्कार एव च ।
न वर्णाश्रमधर्मश्च दम्भे राज्यं प्रकुर्वति ॥ ३५॥

वर्णसङ्कररूपा वै प्रजा जाता महीतले ।
तदा देवगणाः सर्वे भयभीता बभूविरे ॥ ३६॥

कर्मभोगकरा देवा नष्टे कर्मणि शौनक ।
मृतप्राया मृताः सर्व इव ब्रह्माणमब्रुवन् ॥ ३७॥

देवा ऊचुः ।
शरणं त्वदृते देव कं याम कमलासन ।
त्वं धाता त्वं विधाता च सर्वेषां प्राणधारकः ॥ ३८॥

त्वं गतिः सर्वदेवानां त्वमेव ब्रह्मभावितः ।
अतोऽस्मान् रक्ष देवेश दम्भासुरभयात् परात् ॥ ३९॥

कर्महीनं कृतं तेन त्रैलोक्यं सचराचरम् ।
देवाः कर्मान्नभोक्तारो महाबुद्धे कृतास्त्वया ॥ ४०॥

कर्माभावेन जगति मरिष्यामो न संशयः ।
अतस्त्वं सर्वदेवांश्च रक्षस्व प्रपितामह ॥ ४१॥

त्वयैव चाभयं दत्तं पालिताश्च त्वया वयम् ।
अधुना क्षुधयाऽऽविष्टा मरिष्यामस्त्वदग्रतः ॥ ४२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
प्रथम खण्डे वक्रतुण्डचरिते दम्भासुरविजयो नाम द्विचत्वारिंशोऽध्यायः ॥ १.४२

## १.४३ दम्भासुरदूतसंवादो नाम त्रिचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
देवेन्द्राणां वचः क्रूरं श्रुत्वा चिन्तातुरोऽभवत् ।
चर्तुमुखो विचारं स चकाराऽत्र तु शोभनम् ॥ १॥

नावाप देवरक्षार्थं बुद्धिं बुद्धिविशारदः ।
ततश्चिन्तां दुरन्तां वै जगाम कमलासनः ॥ २॥

जगाद देवमुख्यांस्तु भयेन कमलासनः ।
अहं यूयं च सर्वेऽपि प्रार्थयामो गजाननम् ॥ ३॥

स वै सर्वविचारज्ञः करिष्यति शुभं महत् ।
अतस्तत् ध्यानकौशल्यात् ध्यायेम च विनायकम् ॥ ४॥

एकाक्षरविधानेन वक्रतुण्डं यजामहे ।
शरणं सर्वदेवानां भविष्यति न संशयः ॥ ५॥

मुद्गल उवाच ।
ब्रह्मणो गिरमाकर्ण्य देवा मुनिगणैः सह ।
पूजयामासुरव्यग्रा वक्रतुण्डं विधानतः ॥ ६॥

ब्रह्माऽपि ध्यानसंयुक्तस्तोषयामास विघ्नपम् ।
पुरा दृष्टं तथा चित्ते सिद्धिबुद्धियुतं मुने ॥ ७॥

गतेषु शतवर्षेषु ब्रह्माऽपश्यच्च तं हृदि ।
साकारं गुणसंयुक्तं वदन्तं मञ्जुला गिरः ॥ ८॥

दृष्ट्वा विस्मितचित्तोऽसौ यावत्पृच्छति तं प्रभुम् ।

(Page खं. १ अ. ४३ पान ९७)
तावत् सोऽपि बहिर्यातः सिद्धिबुद्धिसमन्वितः ॥ ९॥

ब्रह्माणं बोधयामास वक्रतुण्डो महाबलः ।
सुप्रसन्नतरो जातस्तपसा ध्यानशालिना ॥ १०॥

वक्रतुण्ड उवाच ।
पश्य मां पुत्रभावेन पितामह गणाधिपम् ।
तव ध्यानात् समुत्पन्नं ध्यानजं प्रवदन्त्यतः ॥ ११॥

तपसा पूर्वकाले मां त्वया पुत्रत्वमादरात् ।
याचितं सफलं तच्च कृतं तव मयाऽधुना ॥ १२॥

वचनं वक्रतुण्डस्य श्रुत्वा ब्रह्मा मुदा युतः ।
बहिर्वीक्ष्य गणेशानं सिद्धिबुद्धिविराजितम् ॥ १३॥

प्रणनाम स साष्टाङ्ग वक्रतुण्डं गजाननम् ।
सिद्धिं बुद्धिं विधानेन पूजयामास यत्नतः ॥ १४॥

तद् दृष्ट्वा परमाश्चर्यं देवाः सर्वे समागताः ।
ऋषयस्तं महाभागाः प्रणेमुर्भक्तिभावतः ॥ १५॥

सुतं मानसिकं दृष्ट्वा सिद्धिं बुद्धिं तथात्मजे ।
ताभ्यां सह विनीतास्ते तुष्टुवुर्बद्धपाणयः ॥ १६॥

ब्रह्माऽपि पूजनं कृत्वा स्तोतुं सर्वैः समन्वितः ।
उद्यतोऽभून् महातेजा वक्रतुण्डं सभार्यकम् ॥ १७॥

सदेवर्षिब्रह्मोवाच ।
नमस्ते ब्रह्मभूताय वक्रतुण्डाय साक्षिणे ।
सिद्धिबुद्धियुतायैव गणेशाय नमो नमः ॥ १८॥

विघ्नेशाय नमस्तुभ्यं निर्गुणाय गुणात्मने ।
अनादये च सर्वज्ञ पालकाय नमोऽस्तु ते ॥ १९॥

नमस्ते सर्वरूपाय सर्वाध्यक्षाय धीमते ।
आदिमध्यान्तहीनाय साक्षाद्देवाय ते नमः ॥ २०॥

अमेयशक्तये तुभ्यं मायिभ्यो मोहदाय च ।
अमायिने च मायाया आधाराय नमो नमः ॥ २१॥

सत्याय सत्यरूपाय सत्यपालक रक्षिणे ।
ज्ञानाय ज्ञानदात्रे च ज्ञानगम्याय ते नमः ॥ २२॥

लम्बोदराय देवाय गणानां पतये नमः ।
गणेशाय गुणाधार हेरम्बाय नमो नमः ॥ २३॥

त्वां स्तोतुं न समर्थाश्च वेदाः शास्त्रसमन्विताः ।
योगीन्द्रा देवमुख्याश्च तत्र कोऽहं गजानन ॥ २४॥

यथाबुद्धि प्रमोदेन संस्तुतोऽसि गणेश्वर ।
तेन मे सफलं सर्वं जातं लम्बोदराधुना ॥ २५॥

ब्रह्माण्डानामनन्तानां कारकस्त्वं न संशयः ।
कथं मे पुत्रतां यातः सिद्धिबुद्धिसमन्वितः ॥ २६॥

सिद्धिबुद्धियुतं ब्रह्म हृदि ध्यातं विशेषतः ।
तदेव बहिरायातं तारितुं मां न संशयः ॥ २७॥

इत्युक्त्वा ब्राह्मणैः सार्धं जातकर्मादिकां क्रियाम् ।
चकार च स्वयं ब्रह्मा परमानन्दसंयुतः ॥ २८॥

एकादशदिने तस्य सिद्धिबुद्धिपतिस्त्विति ।
नाम संस्थापयामास द्विजैः सह पितामहः ॥ २९॥

बालक्रीडनभावेन क्रीडति स्म विनायकः ।
सावित्री स्तनपानं सा कारयामास भावतः ॥ ३०॥

दिने दिनेऽथ बालोऽसौ ववृधे शुक्लचन्द्रवत् ।
आनन्दं जनयन् मातुः पितुश्च चरितैः स्वकैः ॥ ३१॥

सिद्धिबुद्धियुतो दक्ष वर्षद्वयवयाः स्थितः ।
एकदा तं विधातारं पप्रच्छ विनयान्वितः ॥ ३२॥

सिद्धिबुद्धिपतिरुवाच ।
तात किं वनवासं त्वं करोषि मुनिभिः सह ।
देवैः परमदुःखार्तो मम किं भाससे प्रभो ॥ ३३॥

तस्य तद्वचनं श्रुत्वा ब्रह्मा हर्षसमन्वितः ।
जगाद गणपं सर्वं वृत्तान्तं दैत्यसम्भवम् ॥ ३४॥

(Page खं. १ अ. ४४ पान ९८)

तच्छ्रुत्वा कोपदीप्तोऽसौ वक्रतुण्डस्तमब्रवीत् ।
हर्षयन् देवविप्रादीन् मेघगम्भीरनिस्वनः ॥ ३५॥

वक्रतुण्ड उवाच ।
दम्भासुरं महावीर्यं हनिष्यामि न संशयः ।
देवेभ्यो ब्राह्मणेभ्यश्च स्वपदानि ददाम्यहम् ॥ ३६॥

एवमुक्त्वा समारूढः सिंहं शस्त्रधरः प्रभुः ।
सिद्धिबुद्धियुतस्तत्र जगामासुरवेश्मनि ॥ ३७॥

नगरप्रान्तभागे स संस्थितो जगदीश्वरः ।
तं देवमुनयः सर्वे ययुर्हर्षसमन्विताः ॥ ३८॥

दूतमिन्द्रं गणेशश्च प्रेषयामास सत्वरः ।
स्वधर्मे तिष्ठ दैत्येन्द्र नो चेद्धन्मि न संशयः ॥ ३९॥

इन्द्रो गत्वा महादैत्यं सामपूर्वमिदं वचः ।
उवाच सर्वभावज्ञो भावपूर्वं सुरद्विषम् ॥ ४०॥

इन्द्र उवाच ।
ब्रह्मणः पुत्रतां यातं पूर्णं ब्रह्म सनातनम् ।
सिद्धिबुद्धिपतिं विद्धि मानसं ध्यानयोगतः ॥ ४१॥

स एव मुनिभिर्देवैरागतः पुरसन्निधौ ।
मां दूतं प्रेषयामास सामार्थं तव सन्निधौ ॥ ४२॥

स्वधर्मे त्वं समातिष्ठ देवाः सन्तु हविर्भुजः ।
वर्णाश्रमयुता लोकास्तिष्ठन्तु विगतज्वराः ॥ ४३॥

इन्द्रस्य वचनं श्रुत्वा कुपितोऽतितरां मुने ।
दम्भासुर उवाचाऽथ तमिद्रं प्रदहन्निव ॥ ४४॥

दम्भासुर उवाच ।
किं करोमि समायातो दूतरूपेण मे गृहे ।
नो चेत्त्वां बन्धयित्वा तु कारागारे क्षिपाम्यहम् ॥ ४५॥

इन्द्र गच्छ महाभाग वद तं गणनायकम् ।
पञ्चमे दिवसे त्वां च योधयामि न संशयः ॥ ४६॥

तत इन्द्रः समायातः सिद्धिबुद्धिपतिं प्रति ।

कथयामास वृत्तान्तं विस्तरेण यथायथम् ॥ ४७॥

श्रुत्वा गणपतिः प्रीतस्तमुवाच महामतिम् ।
समीचीनं त्वया तत्र कृतं देवपते यथा ॥ ४८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते दम्भासुरदूतसंवादो नाम त्रिचत्वारिंशोऽध्यायः ॥ १.४३

## १.४४ दम्भासुरविचारो नाम चतुश्चत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
देवेन्द्रे प्रस्थिते तत्र गणेशस्यैव सन्निधौ ।
दम्भासुरः कविं विप्रमाह्वयामास सन्निधौ ॥ १॥

समागतं महाबुद्धिं शुक्रं मुनिवरं प्रभो ।
प्रणनाम ससाष्टाङ्गं बद्धाञ्जलिपुटः स्थितः ॥ २॥

तं काव्यः स्थापयामास काञ्चनोत्तर आसने ।
पप्रच्छ मामाह्वयसे किमर्थमिति दानवम् ॥ ३॥

शुक्रस्य वचनं श्रुत्वा भयहर्षसमन्वितः ।
उवाच तं महाभागं भक्तियुक्तेन चेतसा ॥ ४॥

दम्भासुर उवाच ।
स्वामिन् योद्धुं समायातः सिद्धिबुद्धिपतिः प्रभुः ।
ब्रह्मणो मानसः पुत्रस्तपसा तेन निर्मितः ॥ ५॥

परिपृच्छामि तत्र त्वां सर्वज्ञं मुनिसत्तमम् ।
येन तं सर्वभावेन जानामि खलु तत्त्वतः ॥ ६॥

(Page खं. १ अ. ४४ पान ९९)
का सिद्धिः का तथा बुद्धिस्तयोः कोऽसौ पतिः प्रभो ।
किं सामर्थ्यधरो भाति वद सर्वं च मेऽग्रतः ॥ ७॥

दम्भस्य वचनं श्रुत्वा शुक्रस्तं पुनरब्रवीत् ।
येन तत्त्वे प्रविज्ञाते गणेशे जायते मतिः ॥ ८॥

शुक्र उवाच ।
शृणु दैत्येन्द्र तस्यापि महिमानं महाद्भुतम् ।
येन त्वं गाणपत्ये च तत्त्वे प्रनिपुणो भवेः ॥ ९॥

सिद्धिर्मोहकरी माया सर्वत्रैव प्रदृश्यते ।
सिध्यर्थं सर्वलोकाश्च यत्नवन्तो भवन्त्यतः ॥ १०॥

इहलोके स्वभोगार्थी सिद्धिमिच्छति दानव ।
परलोकस्य सिध्यर्थं जनस्तत्प्रसमाकुलः ॥ ११॥

ब्रह्मभूयपदप्राप्तिमिच्छेद्वै सिद्धिरूपिकाम् ।
इह ब्रह्मपरप्राप्तिस्त्रिविधा मोहसंज्ञिता ॥ १२॥

माया गणपतेः प्रोक्ता भ्रान्तिरूपा महामते ।
वामभागस्थया देव्या क्रीडतेऽसौ गजाननः ॥ १३॥

भ्रामयन् ब्रह्मविष्ण्वादीन् योगिनो मानवादिकान् ।
ब्रह्मभूतस्वरूपत्वात् स्वाधीनः सततं मतः ॥ १४॥

द्वितीया बुद्धिरूपा च माया तस्य महात्मनः ।
तां शृणुष्व महादैत्य येन त्वं सर्वविद्भवेः ॥ १५॥

यत्किञ्चिद् दृश्यते सर्वं मनोवाणीमयं जगत् ।
मनोवाणीविहीनं यत् सर्वं बुद्धिमयं बभौ ॥ १६॥

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् ।
चित्तं पञ्चविधं प्रोक्तं बुद्धिरूपं तदेव च ॥ १७॥

पञ्चानां बहवो भेदा वक्तुं तान् नैव शक्यते ।
एवमेकाप्यनेकाऽसौ बुद्धिः सर्वत्र दृश्यते ॥ १८॥

मोहधारकरूपां ता सुभ्रान्तां बुद्धिमादरात् ।
ज्ञानरूपां हृदिस्थां तु ब्रह्माकारां प्रविद्धि हि ॥ १९॥

बुद्धियुक्तनरेणैव परत्रेह प्रलभ्यते ।
बुध्या ब्रह्ममयो योगो युज्यते ज्ञानिभिः परः ॥ २०॥

एतादृशी महाभागा दक्षिणाङ्गधराऽसुर ।
तस्य योगेश्वरस्याऽपि गणेशस्य महात्मनः ॥ २१॥

क्रीडार्थं रचिते माये स्वस्याङ्गात्तेन दैत्यप ।

ब्रह्मरूपं च तं विद्धि योगेन लभते नरः ॥ २२॥

स्वानन्दाख्यं परं ब्रह्म तदेव नगरं मतम् ।
तत्र नित्यं वसति यः सिद्धिबुद्धिसमन्वितः ॥ २३॥

ब्रह्मणाराधितं ब्रह्म पुत्रभावार्थमादरात् ।
तदेव गणराजोऽयमागतो ब्रह्मणः सुतः ॥ २४॥

मातुः पितुश्च बन्धं च पुत्रौ हरति यत्त्विति ।
तदर्थं पुत्रभावेन ब्रह्मणा प्रार्थितो विभुः ॥ २५॥

धर्मसंरक्षणार्थाय त्वां हनिष्यति निश्चितम् ।
अतस्त्वं शरणं गच्छ प्रभुमिच्छसि जीवितुम् ॥ २६॥

मुद्गल उवाच ।
काव्यस्य मुनिमुख्यस्य वचनं ब्रह्मदायकम् ।
वेदान्तसारसम्भूतं श्रुत्वा दम्भ उवाच ह ॥ २७॥

दम्भ उवाच ।
स्वामिन् श्रुतं मया वाक्यं त्वदीयं योगसंयुतम् ।
परं तु संशयं छिन्धि हृदिस्थं कथयामि ते ॥ २८॥

एतादृशं परं ब्रह्म गाणेशं चेन् महामुने ।
धर्माधर्मावतस्तस्मात् सम्भूतौ नात्र संशयः ॥ २९॥

योगरूपेण सर्वत्र गणेशस्तिष्ठति प्रभो ।
धर्मस्य रक्षणं सोऽपि किं करोति विकारतः ॥ ३०॥

अधर्मस्य तथा नाशं किमर्थं प्रकरोति सः ।
एतं संशयजातं मे छेत्तुमर्हसि साम्प्रतम् ॥ ३१॥

(Page खं. १ अ. ४५ पान १००)
काव्य उवाच ।
शृणु दम्भ गणेशस्य चेष्टितं सर्वदं परम् ।
येन ते संशयः सर्वो नाशं यास्यति तत्क्षणात् ॥ ३२॥

इदं सृष्टं गणेशेन नानाभेदमयं जगत् ।
तत्र स्वस्वपदे चैव स्थापिता जन्तवोऽभवन् ॥ ३३॥

अधर्मस्य च धर्मस्य व्यवस्था तेन सा कृता ।

तत्र लोभन वै धर्ममधर्मो जयते यदा ॥ ३४॥

सुराणां वै तदा तेजः क्षीणं भवति सर्वतः ।
असुराणां महत्तेजो वर्धते च दिने दिने ॥ ३५॥

यदाऽयं गणराजस्तु देवानां पक्षवर्धनः ।
असुराणां विनाशाय स्वयं भवति चोद्यतः ॥ ३६॥

हत्वा देवगणैः सर्वैरसुराणां बलं महत् ।
स्वस्थाने स्थापयत्येव धर्मं सर्वप्रयत्नतः ॥ ३७॥

धर्मेण सकलं दैत्य ह्यधर्मस्य बलं हतम् ।
तदा दैत्यादिकानां तु मूलच्छेदो भविष्यति ॥ ३८॥

देवानामुदितं तेजो भवेद्यदि महाद्भुतम् ।
दैत्याय वरदस्तर्हि भवेच्चानेकरूपवान् ॥ ३९॥

असुरैर्वरसंयुक्तैर्धर्मे क्षीणे समन्ततः ।
अधर्मस्य स संस्थां वै यथापूर्वमकल्पयत् ॥ ४०॥

एवं लोभसमायुक्ताः सुरा दैत्या भवन्ति चेत् ।
तदा तेषां विनाशाय गणेशो यततेऽसुर ॥ ४१॥

नास्ति तस्य विचारेण स्वः परः क्वचिदेव च ।
क्रीडार्थं स्वात्मभावेषु स्थापयत्येव वै जनान् ॥ ४२॥

मुद्गल उवाच ।
शुक्रस्य वचनं रम्यं श्रुत्वा दम्भः प्रतापवान् ।
गणेशं मनसा ध्यायन् संस्थितो नगरे स्वके ॥ ४३॥

एकान्तेऽसौ महातेजा विचारं प्रचकार ह ।
अयं गणेशनामा वै पूर्णं ब्रह्म सनातनम् ॥ ४४॥

तमेव शरणं गच्छन् यशस्वी स भविष्यति ।
सर्वेषु समरूपेण स्थितोऽयं नात्र संशयः ॥ ४५॥

त्यक्त्वा सिद्धिपतिं सिद्धिमिच्छेद्यो दुर्मतिः परम् ।
असिद्धिर्भविता तस्य सुहृद्भिर्नात्र संशयः ॥ ४६॥

बुद्धेः पतिं गणेशं यस्त्यक्त्वा कुशलमिच्छति ।
तस्याऽकुशलमवं च भविता दुष्टभावतः ॥ ४७॥

सिद्धिबुद्धिविहीनं तु ना किञ्चिद् दृश्यते मया ।
अतस्त्वं शरणं यामि सुरासुरसमं विभुम् ॥ ४८॥

इति निश्चितसङ्कल्पो दम्भः सुष्वाप निर्भयः ।
गणेशं हृदि विन्यस्य भक्तिभावेन भावितम् ॥ ४९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
प्रथमे खण्डे वक्रतुण्डचरिते दम्भासुरविचारो नाम चतुश्चत्वारिंशोऽध्यायः ॥ १.४४

## १.४५ दम्भासुरशान्तिकथनं नाम पञ्चचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
शृणु दक्ष महाप्राज्ञ महद् दम्भस्य कौशलम् ।
त्यक्त्वाऽऽसुरस्वभावं स संस्थितो विगतज्वरः ॥ १॥

प्रातरुत्थाय दैत्यान् स सर्वानाकारयत् स्वयम् ।
उवाच तान् महातेजा वचनं शुक्रसन्निधौ ॥ २॥

दम्भासुर उवाच ।
शृणुध्वमसुराः सर्वे गुरुणाऽहं प्रबोधितः ।
शरणं वक्रतुण्डं च यामि तत्र न संशयः ॥ ३॥

सुराणामधिपो नाऽयं नायं दैत्याधिपः कदा ।
(Page खं. १ अ. ४५ पान १०१)
ब्रह्माकारेण सर्वत्र सिद्धिबुद्धिपतिः स्थितः ॥ ४॥

तस्य तद्वचनं श्रुत्वा कुपिता दानवास्तदा ।
ययुः स्वं स्वं गृहं सर्वे त्यक्त्वा दम्भासुरं खलाः ॥ ५॥

दम्भासुरः प्रसन्नात्मा काव्येन सहितः स्वयम् ।
शरणं गणनाथं च ययौ हर्षसमन्वितः ॥ ६॥

नगराद्बहिरागत्य ययौ देवस्य सन्निधिम् ।
दण्डवत्पतितः पृथ्व्यां कृताञ्जलिरुपस्थितः ॥ ७॥

तुष्टाव तं गणाध्यक्षं तद्दर्शनमहोत्सवः ।

यथान्यायं पूजयित्वा निबद्धकरसम्पुटः ॥ ८॥

दम्भासुर उवाच ।
नमस्ते ब्रह्मरूपाय ब्रह्माकारशरीरिणे ।
ब्रह्मणे ब्रह्मदात्रे च गणेशाय नमो नमः ॥ ९॥

नमस्ते त्रिदशेशाय दैत्यदानवपाय च ।
सर्वत्र योगरूपाय भावहीनाय ते नमः ॥ १०॥

सिद्धिबुद्धिपते तुभ्यं नमः सिंहध्वजाय च ।
गणानां पतये तुभ्यं हेरम्बाय नमो नमः ॥ ११॥

एकदन्ताय देवाय ह्यनन्तविभवाय ते ।
विघ्नेशाय महाविघ्ननाशनाय नमो नमः ॥ १२॥

अपारगुणधाराय दैत्यदानवमर्दिने ।
मनोवाणीमयायैव सर्वरूपाय ते नमः ॥ १३॥

मनोवाणीविहीनाय योगिभ्यो योगदायिने ।
योगाय योगनाथाय विश्वपाय नमो नमः ॥ १४॥

मायाधाराय मायायाश्चालकाय नमो नमः ।
मायाहीनाय सर्वत्र समभावधराय ते ॥ १५॥

अव्यक्ताय नमस्तुभ्यं व्यक्तिमूलधराय च ।
निर्मोहाय समोहाय लम्बोदर नमो नमः ॥ १६॥

यं स्तोतुं न समर्थाश्च वेदाः साङ्गा महर्षयः ।
योगीन्द्रा ब्रह्मविष्ण्वाद्यास्तं किं स्तौमि परात् परम् ॥ १७॥

इत्युक्त्वा पतितः पृथ्व्यां दम्भो भक्तिसमन्वितः ।
तमुत्थाप्य गणाधीश ऊचिवान् भक्तिभावितः ॥ १८॥

गणेश उवाच ।
त्वया दम्भ कृतं स्तोत्रं मम सन्तोषवर्धनम् ।
यः पठेत् पाठयेत्तद्वा स सर्वं सुखमाप्नुयात् ॥ १९॥

पुत्रपौत्रकलत्रादि धनधान्यप्रदं भवेत् ।
आधिव्याधिहरं चैव सर्वोपद्रवनाशनम् ॥ २०॥

एककालं द्विकालं वा त्रिकालं सततं तथा ।

यः पठेत् स नरोऽत्यन्तं मम प्रीतिकरो भवेत् ॥ २१॥

त्वां हन्तुं क्रोधसंयुक्त आगतोऽहं न संशयः ।
अधुना शरणं यातस्ततो हन्मि न निश्चितम् ॥ २२॥

वरं वरय मत्तस्त्वं यत्त्वच्चित्ते स्थितं परम् ।
स्तोत्रेण भक्तिभावेन सन्तुष्टोऽहं ददामि ते ॥ २३॥

गणेशवचनं श्रुत्वा दम्भो हर्षसमन्वितः ।
उवाच गणपं तत्र भक्तिनम्रात्मकन्धरः ॥ २४॥

दम्भासुर उवाच ।
यदि देवेश तुष्टोऽसि यदि देयो वरो हि मे ।
अचलां देहि ते भक्तिं तदा नाथ नमोऽस्तु ते ॥ २५॥

आज्ञां त्वं ज्ञापय विभो वृत्यर्थं मे च साम्प्रतम् ।
स्थानं देहि गणाध्यक्ष तत्र स्थास्यामि निश्चलः ॥ २६॥

दम्भस्य वचनं श्रुत्वा गणेशस्तमुवाच ह ।
सुप्रसन्नतया दक्ष भक्तं गम्भीरनिस्वनः ॥ २७॥

सिद्धिबुद्धिपतिरुवाच ।
भविता मयि भक्तिस्ते दृढा ह्यव्यभिचारिणी ।
तिष्ठ स्थाने स्वके त्वं वै दम्भ हर्षसमन्वितः ॥ २८॥

न त्वं न्यूनोऽसि मे क्वापि देवा नैवाधिका मताः ।
स्वस्वधर्मे स्थिताः सर्वे मम प्रीतिविवर्धनाः ॥ २९॥

स्वधर्मत्यागदोषेण क्रुद्धोऽहं नाशयामि तान् ।
अतस्त्वं निर्भयो भूत्वा चिरं तिष्ठ महासुर ॥ ३०॥

यत्र मे स्मरणं नास्ति कार्यादौ दैत्यसत्तम ।
तत्र त्वं दम्भभावेन कार्यनाशं सदा कुरु ॥ ३१॥

कर्मादौ पूजनं यत्र मम नास्ति यदासुर ।
तदा तद्ध्वंशभावेन निष्फलं कुरु सर्वदा ॥ ३२॥

मम भक्तिसमायुक्ता ये नराः सततं प्रियाः ।
तान् पालय प्रयत्नेन दम्भ हीनस्वभावतः ॥ ३३॥

यत्र मे स्मरणं नास्ति पूजनं च महामते ।

आदौ तत्र च ते भागः कर्मरूपो मया कृतः ॥ ३४॥

एवमुक्त्वा स तं दम्भं गणेशोंऽतर्दधे स्वयम् ।
देवाश्च मुनयः सर्वे जयेत्युक्त्वा ययुस्ततः ॥ ३५॥

स्वस्वस्थानेषु दीप्तास्ते स्थिता भयविवर्जिताः ।
पातालविवरे दैत्याः स्थिता निर्व्याकुलाः प्रभो ॥ ३६॥

एवं दम्भासुरं शान्तं स चकार गजाननः ।
ब्रह्मपुत्रत्वमापन्नस्तदप्युक्तं मया परम् ॥ ३७॥

य एतच्छ्रुणुयान्नित्यं श्रावयेद्वा समाहितः ।
स दम्भभयनिर्मुक्तो याति ब्रह्म सनातनम् ॥ ३८॥

यं यं चिन्तयते कामं तं तं प्राप्नोति मानवः ।
सर्वसम्पत्समायुक्तस्तिष्ठेद्वै विघ्नवर्जितः ॥ ३९॥

अधुना वामनस्थापि कथयामि समासतः ।
चरित्रं गणनाथस्य भक्त्या युक्तं महाद्भुतम् ॥ ४०॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते दम्भासुरशान्तिकथनं नाम पञ्चचत्वारिंशोऽध्यायः ॥ १.४५

## १.४६ वामनवरप्रदानं नाम षट्चत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
श्रुत्वा कथां गणेशस्य हर्षश्चेतसि वर्धते ।
अतः कथय सर्वज्ञ चरित्रं वामनस्य यत् ॥ १॥

मुद्गल उवाच ।
कश्यपो मुनिशार्दूलः प्रजापतिसमोऽभवत् ।
अदितिस्तस्य पत्न्यासीत् ज्येष्ठा परमधार्मिका ॥ २॥

तस्यां च कश्यपाद्देवा इन्द्राद्या जज्ञिरे प्रभो ।
तेषां विरुद्धभावेन स्थिता दैत्या मुनेः सुताः ॥ ३॥

बलेन वरगर्वेण देवान् हन्तुं समुद्यताः ।

अभवन् विष्णुना ते वै नानारूपेण नाशिताः ॥ ४॥

न प्रापुः स्वर्गराज्यं ते सर्वमान्यं यदा तदा ।
काव्यं सकलनीतिज्ञं शरणं प्रययुः पुनः ॥ ५॥

तेषां सर्वं स वृत्तान्तं विदित्वा मुनिपुङ्गवः ।
दैत्यानुवाच सर्वज्ञः काव्यो वेदविदां वरः ॥ ६॥

काव्य उवाच ।
बलिदानवमुख्या वै शृणुध्वं मे वचो हितम् ।
यज्ञे देवाः समुत्पन्ना यज्ञाधारास्ततः सुराः ॥ ७॥

अतोऽश्वमेधयज्ञैश्च यजध्वं शतसङ्ख्यकैः ।
बलिरिन्द्रो महाबाहुर्भविता नात्र संशयः ॥ ८॥

द्वेषभावं च देवानां सदा सञ्छाद्य यत्नतः ।
(Page खं. १ अ. ४६ पान १०३)
तेन स्वर्गभुजो दैत्या यूयं सर्वत्र पूजिताः ॥ ९॥

भविष्यथ महाभागास्तस्मात् कुरुत मद्वचः ।
सर्वे हृष्टाश्च तं तत्र साधु साध्वब्रुवन् स्थिताः ॥ १०॥

ततस्ते बलिराजं च मुख्यं कृत्वा महाबलाः ।
त्वरिता अश्वमेधेषु दीक्षितं चक्रुरादरात् ॥ ११॥

बलिर्विरोचनाज्जातो विष्णुभक्तिपरायणः ।
अधर्मे न रुचिस्तस्य जायते हि कदाचन ॥ १२॥

आदौ त्यक्त्वा गणेशानं विष्णुं स्मृत्वा महासुरः ।
आद्यं तं यज्ञमारेभे विष्णुभक्ततया खलः ॥ १३॥

तस्य चेष्टितमाज्ञाय विघ्नः परमहर्षितः ।
उवाच सदसि ह्यादौ पूजितो न गणाधिपः ॥ १४॥

भुक्तिमुक्तिप्रदाता यः सर्वसिद्धिकरो विभुः ।
सिद्धिमिच्छन्ति तं त्यक्त्वा तेऽसिद्धाः प्रभवन्ति हि ॥ १५॥

विष्णोर्बलेन दैत्यस्य भवेत् सिद्धिश्च कीदृशी ।
भक्षयिष्यामि तत्सर्वं कर्म तेन मखे कृतम् ॥ १६॥

इत्युक्त्वा स स्वयं विघ्न आययौ क्रोधसंयुतः ।

प्रविश्य देवराजस्य हृदये संस्थितोऽभवत् ॥ १७॥

यज्ञाः सङ्कल्पितास्तस्य विप्रैस्तु शतसङ्ख्यकाः ।
आद्ये यज्ञे समारब्धे इन्द्रश्चिन्तातुरोऽभवत् ॥ १८॥

शतयज्ञप्रभावेण बलिरिन्द्रो भविष्यति ।
ततः स शरणं विष्णुं जगाम सुरनायकः ॥ १९॥

नत्वा स्तुत्वा महातेजाः प्रार्थयामास सादरम् ।
विष्णुं देववरं तत्र बलियज्ञविनाशने ॥ २०॥

एतस्मिन्नन्तरे तत्र विघ्नः कालस्वरूपधृक् ।
बलवान् विष्णुमाविश्य संस्थितो हृदयेऽभवत् ॥ २१॥

बलेः प्रचेष्टितं पूर्णं कथितं वज्रपाणिना ।
तज्ज्ञात्वा सकलं विष्णुरिन्द्रं प्रोवाच सत्वरम् ॥ २२॥

विष्णुरुवाच ।
अदित्या कश्यपेनापि तपस्तप्तं सुदारुणम् ।
शतवर्षं मदर्थं च तस्मिन् काले सुराधिप ॥ २३॥

तयोरहं प्रसन्नात्मा वरदश्च पुराऽभवम् ।
ताभ्यां त्वं पुत्रतां याहि याचितं सर्वभावतः ॥ २४॥

ओमित्युक्तं मया तत्र तं वरं सफलं प्रभो ।
अधुनाऽहं करिष्यामि बलेर्यज्ञस्य नाशने ॥ २५॥

विस्मृता विष्णुनाऽत्यन्तं बलेर्भक्तिर्महाद्भुता ।
स बलेर्निग्रहार्थं च स्वयमवोद्यतोऽभवत् ॥ २६॥

स विष्णुः कश्यपाज्जातो ह्यदित्यां वामनः प्रभुः ।
बलेर्बलं निरीक्ष्यैव न शशाक प्रचालितुम् ॥ २७॥

मनसि क्षुभितो विष्णुः कश्यपं पितरं तदा ।
पप्रच्छ बलिनाशाय वदोपायं महामुने ॥ २८॥

षडक्षरं महामन्त्रं वक्रतुण्डस्य तं ददौ ।
ततोऽसौ च विदर्भेषु गत्वा तपसि संस्थितः ॥ २९॥

दशवर्षं महोग्रं स तपस्तेपे सुदारुणम् ।
निराहारतया दक्ष गणेशं हृदि चिन्तयन् ॥ ३०॥

उग्रेण तपसा तस्य प्रत्यक्षः सिंहवाहनः ।
षडक्षरप्रभावेण तं ययौ भक्तवत्सलः ॥ ३१॥

चतुर्बाहुधरः पूर्णः सिद्धिबुद्धिसमन्वितः ।
एकदन्तो गजाकारमुखः पाशाङ्कुशादिधृक् ॥ ३२॥

सिन्दूरारुणदेहश्च शूर्पकर्णो महोदरः ।
कोटिसूर्यसमानेन तेजसा सुविराजितः ॥ ३३॥

तं दृष्ट्वा सहसोत्थाय वामनः प्रणनाम सः ।
खं १ अ ४३ पान १०४
बद्धाञ्जलिपुटो भूत्वा स्तोतुं समुपचक्रमे ॥ ३४॥

वामन उवाच ।
नमो विघ्नपते तुभ्यं भक्तविघ्नविनाशिने ।
अभक्तविघ्नादात्रे च गणेशाय नमो नमः ॥ ३५॥

वक्रतुण्डाय सर्वेश पालकाय नमो नमः ।
नानारूपधरायैव सर्वान्तर्यामिणे नमः ॥ ३६॥

सर्वं चराचरं स्वामिंस्त्वदाज्ञा वशवर्ति च ।
विभूतिभिर्महाराज कुरुषे सर्वमञ्जसा ॥ ३७॥

ब्रह्मा प्रजापतीनां त्वं यज्ञानां विष्णुरेव च ।
ईश्वराणां स्वयं शम्भुर्देवानां त्वं पुरन्दरः ॥ ३८॥

प्रकाशानां रविस्त्वं च चन्द्रोऽन्नेषु गणाधिप ।
यमो यमवतां त्वं वै वरुणो यादसां प्रभो ॥ ३९॥

वायुर्बलवतां त्वं च निधीनां धनपः स्वयम् ।
अग्निर्वै दाहकानां त्वं रक्षसां निर्ऋतिः स्वयम् ॥ ४०॥

नागानां शेषरूपोऽसि योगिनां शुक्र एव च ।
कुमाराणां त्वं च सनत्कुमारोऽसि न संशयः ॥ ४१॥

गुहः सेनापतीनां त्वं मृगाणां सिंहवेषभृत् ।
एवं नानास्वरूपैस्त्वं जगद्रक्षणतत्परः ॥ ४२॥

त्वां स्तोतुं कः समर्थः स्याद्योगरूपं सनातनम् ।

वेदाः शेषश्च वेधा च शक्ता न स्तवनेऽभवन् ॥ ४३॥

तत्र मन्दमतिः क्वाहं पारं गन्तुं तव स्तुतेः ।
तथापि च यथाबुद्धि संस्तुतोऽसि च विघ्नप ॥ ४४॥

तव दर्शनमात्रेण कृतकृत्योऽस्मि साम्प्रतम् ।
धन्यं जन्म मदीयं वै येन दृष्टो गजाननः ॥ ४५॥

धन्यौ माता पिता मेऽद्य स्थलं धन्यं तपोऽपि च ।
षडक्षरश्च मन्त्रोऽयं धन्यो येन त्वमागतः ॥ ४६॥

एवमुक्त्वा ननर्तोऽसौ भक्तिभावपरिप्लुतः ।
रोमाञ्चितशरीरोऽभूदानन्दाश्रु सृजन्मुहः ॥ ४७॥

देहभावं परित्यज्य वामनो हर्षसंयुतः ।
तदेकनिष्ठतां प्राप्तो महाभागः प्रजापते ॥ ४८॥

तं तादृशं गणाधीशो दृष्ट्वा प्रेमपरिप्लुतम् ।
जगाद परमात्माऽसौ वामनं भक्तवत्सलः ॥ ४९॥

गणेश उवाच ।
शृणु वामन मे वाक्यं वरं वृणु हृदीप्सितम् ।
तव भक्त्या तपोयुक्त्या स्तुत्या वै तुष्टिमागतः ॥ ५०॥

दास्यामि सकलं तुभ्यं यद्यपि स्यात् सुदुष्करम् ।
धन्योऽसि बालभावेऽपि भक्तिस्ते मे परापदि ॥ ५१॥

त्वया कृतमिदं स्तोत्रं सर्वदं प्रभविष्यति ।
यः पठेच्छ्रावयेद्वापि तस्य सिद्धिर्भविष्यति ॥ ५२॥

यं यं चिन्तयते कामं तं तं दास्यामि दुर्लभम् ।
अन्ते मोक्षं महाविष्णो स्वानन्दे प्रददाम्यहम् ॥ ५३॥

इति तस्य वचः श्रुत्वा वक्रतुण्डस्य शोभनम् ।
वामनः प्रणतो भूत्वा तं जगाद गजाननम् ॥ ५४॥

प्रसन्नो यदि देवेश देहि भक्तिं दृढां च ते ।
बलिं देवरिपुं ढुण्ढे मत्साध्यं कुरु दैत्यपम् ॥ ५५॥

यदाहं त्वां स्मरिष्यामि तदात्मानं प्रदर्शय ।
यथा न मां भवेद्विघ्नो वरं देहि गजानन ॥ ५६॥

तथेति तमथोक्त्वाऽसौ गणेशोंऽतर्दधे स्वयम् ।
(Page खं. १ अ. ४७ पान १०५)
वामनस्तत्र देवेशं स्थापयामास हर्षतः ॥ ५७॥

अदोषाख्यं महाक्षेत्रं विदर्भे स्थानमुत्तमम् ।
वक्रतुण्डस्य सम्भूतं नराणां सर्वसिद्धिदम् ॥ ५८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते वामनवरप्रदानं नाम षट्चत्वारिंशोऽध्यायः ॥ १.४६

## १.४७ वामनचरितं नाम सप्तचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
वरं लब्ध्वा स सम्पूज्य वक्रतुण्डं च वामनः ।
कश्यपं प्रणतो भूत्वा ययौ यज्ञं बलेरपि ॥ १॥

तं दृष्ट्वा सूर्यसङ्काशं वेदाध्ययनसंयुतम् ।
ह्रस्वाकृतिं मुनिश्रेष्ठं विस्मिता मुनयोऽभवन् ॥ २॥

बलिरुत्थाय तं नत्वा पूजयामास भक्तितः ।
पप्रच्छ किं ददे तुभ्यं मां तद् ब्रूहि महामुने ॥ ३॥

ततः शुक्रेण सर्वं तज्ज्ञातं तस्य प्रयोजनम् ।
गणेशपूजनं चादौ न कृतं दुष्टबुद्धिना ॥ ४॥

तेन विघ्नस्वरूपं च विष्णुरूपेण संस्थितम् ।
अधुना यादृशं भावि तथा भवतु तादृशम् ॥ ५॥

बलेर्वचनमाकर्ण्य वामनः प्राह तं ततः ।
देहि त्रिपदरूपां मे भूमिं दैत्यपते किल ॥ ६॥

ददौ बलिर्महाभक्त्या तां भूमिं सादरो यथा ।
तथा वामनदेवोऽपि गणेशं मनसाऽस्मरत् ॥ ७॥

विराड्रूपं ततो धृत्वा पादं चिक्षेप देवपः ।
एकेन सकलं स्वर्गं पादेनावृत्य सत्वरः ॥ ८॥

